उद्दिश्याभ्युदयन्तथा एतांस्तुश्राद्धकालान्वैकाव्यानाह प्रजापतिरित्या दिकं आभ्युदयआराममहादानाद्युत्सवः यत्त्वाम्नातं नजीवत्पितृकः कुर्या च्छ्राद्धमग्निमृतेद्विज इत्यनेननिरग्नि जीवत्पितृकस्य श्राद्ध-निषेधइति तदपिन उद्वाहेपुत्रजननइत्यत्र साग्निशब्दाभावान्नि-रग्निविषयत्वोपपत्तेः उक्तञ्चअनग्निकोपिकुर्वीत जन्मादौष्टद्विक-र्मणीति यच्च नजीवत्पितृकइत्यनेन साग्निजीवत्पितृकस्य श्राद्धवि-धानं तस्याष्टकादिनियत श्राद्धविषयं नसामान्येनसर्वश्राद्धविधायकं गयापरपक्षादिश्राद्धनिषेधानुपपत्तेः यदप्युक्तं जीवत्पितृकस्यहोमांत मनारम्भोवेति तत्साग्नेःपिण्डपितृयज्ञादि निषेधविषयंनाभ्युद-यिकमेवेति। तेभ्यःपूर्वंतरायेवैइत्यादिना भ्युदयिकस्य प्रतिप्रस-वोपपत्तेः तस्माज्जीवत्पित्रादि त्रिकस्याभ्युदयिकं श्राद्धंकर्तुमुचि-तमितिसिद्धम् ॥

## मू० नान्दीमुखाःपितरः प्रीयन्तामित्य क्षय्यस्थाने ॥ ८ ॥

अत्रनांदीमुखान्पितृनावाहयिष्य इत्यनेनैवनांदीमुखत्वात्प्राप्तौ पुनस्तद्ग्रहणंसर्वत्रप्रयोगार्थं तदुक्तं तत्रनांदीमुखमिति विशेषःस-मुदाहृतइति प्रकृतिश्राद्धेष्वक्षय्योदकदानन्तु अर्घदानवदिष्यते। षष्ठ्यैवनित्यन्तत्कुर्या न्नचतुर्थ्याकदाचनेति कात्यायनेनषष्ठ्यन्तत-न्त्वयोर्विहितत्वादत्रतन्निषेधोवाचनिकः।तेनप्रथमाविभक्त्यातन्त्रेण चाक्षय्योदकदान मत्रचीरयवोदकैर्भवतीत्यर्थः। तथाच तथाक्ष-य्योदकस्थानेदद्या त्क्षीरयवोदकमिति पितृग्रहणं स्वपितृप्राप्त्यर्थं तेनजीवत्पित्रादिकोपि स्वमातृमातामहादिभ्यएव दद्यान्नपितृ संबन्धिभ्यइत्यर्थः अत्रैकआहुः अनग्निकोपिकुर्वीत जन्मादौष्टद्वि

कर्मणि येभ्यएवपिता दद्यात्तानेवोद्दिश्यपार्वं णमित्यादिवचनेषु यत्तच्छब्दनिर्द्देशा त्पितृभ्यएवदद्यान्नस्वपितृभ्य इतितदयुक्तं स्वपितृभ्यःपितादद्यातमुत संस्कारकर्मस्विति कात्यायनेन प्रादुर्भावे पुत्रपुत्र्यो र्ग्रहणे चन्द्रसूर्ययोः स्नात्वानन्तरमात्मीया न्पितृन्श्राद्धे न तर्पयेदिति कार्ष्णाजिनिनाच स्वपितृभ्यएवश्राद्धविधानात् नचमातृमातामहादिकं परित्यज्य पितृसंबन्धिभ्योदातुमुचितं अतस्वस्वपितृभ्यएवेतिसूक्तम् ॥

## मू० नान्दीमुखान्पितॄन्वाचयिष्येऽइति पृच्छतिवाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरःपितामहाः प्रपितामहाः नान्दीमुखा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ ६ ॥

अत्रप्रथमोद्दिष्ट नान्दीमुखशब्देन वृद्धप्रपितामहादित्रिकस्यैव नान्दीमुखत्वंमाभूदित्य श्रुमुखानामपि तत्प्राप्त्यर्थं पुनर्नान्दीमुखग्रहणं एवंमातामहेष्वपि अतएवमन्त्रे पितरःपितामहाइति वहुत्वमुक्तं चकारोमातृवर्ग प्राप्त्यर्थं तथाचब्रह्मपुराणे मातामहेभ्यस्तथानांदीवक्त्रेभ्यएवच अथनांदीमुखीभ्यस्तु मातृभ्यःश्राद्धमुत्तममिति । ननुचाभ्युदयिके मातृश्राद्धस्यपू र्वंभावित्वा त्पितृग्रहणंकिमर्थं उच्यते अग्निहोत्रंजुहोति यवागूंपचतीतिवत्पाठोर्थेनबाध्यतइत्यदोषः तथाचशाठ्यायनः नांदीमुखीभ्यइत्यादि मातृश्राद्धन्तु पूर्वंस्या त्पितृणान्तदनन्तरम् ततोमातामहानाञ्च वृद्धौश्राद्धत्रयंस्मृतमित्यादिच अतश्चनांदीमुख्योमातरः प्रीयन्तामित्यादिक्रमेणयथा-

लिङ्गम्प्रयोग: अत्रैतत्संदिह्यते किमत्रनवदैवत्यं श्राद्धमुतद्वादशदैवत्य-मिति उभयथावचनदर्शना त्तथाहि मातृभ्य:प्रथमन्दद्यात्पितृभ्य-स्तदनन्तरं ततोमातामहानाञ्च वृद्धौश्राद्धत्रयं स्मृतमित्यादि चतुर्विंश तिमतेतुमातृपूर्वान्पितृन्पूज्य ततोमातामहीस्तथा मातामहन्ततः केचिदेवंयुग्मांस्तुभोजयेत् पुराणसमुच्चयेपि शस्तंनांदीमुखंश्राद्धम्पि-ण्डैर्द्वादशभि:सदातथापि दधिदूर्वाक्षतयवै र्बदरेणविमिश्रितै:पिण्डा नांदीमुखे देयामातृपूर्वांश्चद्वादशेति एवंविप्रतिपत्तौ यथाशाखं-यथाकुलन्देशंवाव्यवस्थेत्यविरोध: तुल्यविकल्पोवा अथवाधनधान्य पुत्रपश्वादि वृध्यर्थंक्रियमाणम्वृद्धिश्राद्धं अग्न्याधानाद्यभ्युदयनिमि-त्तमाभ्युदयिकमितिभेद:। तत्र वृद्धिश्राद्धन्द्वादशदैवत्यं आभ्युदयिकं नवदैवत्य मितिव्यवस्थेति अन्वष्टकायांयच्छ्राद्धं यच्छ्राद्धम्वृद्धिहेतुकं पित्रादीनांपृथग्दानं स्त्रीणांपिण्ड: पृथक्पृथगिति अत्रवृद्धिहेतुक-मित्यभिधानात् तथा शरीरोपचयेश्राद्ध मर्थोपचयएवच पुष्ट्यर्थमि-तिविज्ञेय मौपचारिकमुच्यते तथा नक्षत्रग्रहपीडासु दुष्टस्वप्नाव-लोकने इच्छाश्राद्धानिकुर्वीत नवसस्यागमेतथेतिवचनादिति ॥

## सू० नस्वधाम्प्रयुञ्जीत ॥ १० ॥

निषेधांतरोपलक्षणञ्चैतत् तेनशर्मादिकमप्यत्र नप्रयुंजीते-त्यर्थ: तथाचपुराणसमुच्चये नस्वधाशर्मवर्मेति पितृनामनचोच्चरेत् नकर्मंपितृतीर्थेन नकुशाद्विगुणीकृता: नतिलैर्नापसव्येन पित्र्यम-न्त्रविवर्जितं अस्मच्छब्दंनकुर्वीत श्राद्धे नान्दीमुखेक्वचिदिति अतश्च नांदीमुखपितरमुकगोत्रे त्यादिप्रयोग: । अन्येतुपार्वणवन्नामश-र्मादिक मपिप्रयुंजते तन्निषे धदर्शनात्कथमितिचिंत्यं पार्वणव-दित्यतिदे शाद्वातद्विधि: अत्रकश्चिदाह प्रकृतेस्वधावाचनेस्वधां-

प्रयुंजोतेतिनिषेधइतितदयुक्तं सामान्येनाभ्युदयिकेतन्निषेधात् ॥

मू॰ युग्मानाशयेदत्र ॥ ११ ॥

अत्राभ्युदयिकेयुग्मान्द्विचतुरादी न्विप्रानाशयेद्भोजयेदित्यर्थः अस्य दैविकत्वाद्दैवे युग्मान्यथाशक्ति इतिपरिभाषयैवयुग्मत्वप्राप्तौ विशिष्टविध्यर्थंयुग्मग्रहणम् तेनपित्र्येपि युग्मानेवप्रातर्निमंन्त्र्याशयेदित्यर्थः तथाचकात्यायनः प्रातरामन्त्रितान्विप्रा न्युग्मानुभयतस्तथेति अन्यच्च ज्येष्ठोत्तरकरान्युग्मा न्कराग्राग्रपवित्रकान् कृत्वार्घंसम्प्रदातव्यं नैकैकस्यात्प्रदीयतइति युग्मानितिपुंस्त्वमविवक्षितम् तेनयुग्माभावेस्त्रियोपीत्यर्थः तथाच मातृश्राद्धे तुविप्राणाम लाभेपूजयेदपि पतिपुत्रान्विताभव्या योषितोष्टौकुलोद्भवाइति वृद्धवसिष्ठवचनात् शंखोपि पित्रादित्रयपत्नीस्तु भोज्यामातृप्रतिद्विजैः। स्त्रीणामेवतुतद्यस्मा न्मातृश्राद्धमतःस्मृतमिति आशयेदित्यपिविशिष्टविध्यर्थं तृप्तिप्रश्ने नैवभोजनोपलब्धेः अतश्चगुडशर्करादिनामधुरान्नम् भोजयेदितिविशिष्टविधिरित्यर्थः तथाचभविष्यत्पुराणम् ब्राह्मणेभ्यस्ततोदद्या द्भोजनंमधुरञ्च गुडमिश्रंसितायुक्तं संघृतञ्चोदनम्परं सरत्नान्मोदकांश्चैव नचाम्लकटुकांस्तथा कृष्णात्रेयोपि अन्यश्राद्धेषुदातव्यं नमांसम्मातृपूजनमिति अपिच अपसव्यंजानुपात मम्लम्मांसविवारिजम् रक्तं विवर्जयेद्दर्भान्समूलांश्चतिलानपीति तथा द्राक्षामलकमूलानियवान्वाथनिवेदयेत् तानेवदक्षिणार्थे तु दद्याद्विप्रे षुसर्वदेति ब्रह्मपुराणम् अतश्चद्राक्षामलकमूल यवनिष्क्रयिणींदक्षिणां युवाभ्यांसम्प्रददइत्यादिप्रयोगः नैकैकस्यावदीयतइतुक्तेः तथाभ्युदयिकश्राद्ध सन्देहोनिरस्यते तत्रकात्यायनः स्वपितृभ्यःपितादद्यात्सुतसंस्कार-

कर्म्मसु पिण्डानीद्वाहनात्तेषान्तस्या भावेतुतत्क्रमादिति अस्यार्थः पिण्डशब्दः श्राद्धं लक्षयति आउद्वाहनादितराड भिविधौततश्च- पुत्रस्य निषेकादिप्रथमविवाहपर्यंतेषु संस्कारकर्म्मसु पिता स्वमातृ- स्वपितृस्वमातामहेभ्यः श्राद्धं दद्यात् नपुत्रमातृमतामहादिभ्यः तस्य पितुरभावेतेषाम्पि तुर्मोत्रादीनामेवनवानां तत्क्रमादेनक्र- मेणपित्रादीनान्तेनैव क्रमेणाधिकारीज्येष्ठभ्रात्रादिरर्पदद्यादिति नन्वेवंसतिसंस्कार्यस्य पुत्रादेर्म्मृतपित्रोः श्राद्धादौमुख्याधिकारित्वा त्तदतिक्रमोनायुक्तइति नचजीवत्पित्रोर्ह्यनुष्टानक्रमः समृतपित्रो- रप्युचितत्वादितिवाच्यं प्रेतेभ्योदद्यादित्यादिवचनैः प्रत्तानामवश्य- देयत्वात् तस्मात्तेषान्तस्याभावेतुतत्क्रमादित्यस्यतत्क्रमात्तदुपक्रमा न्मृतपित्रादिमारभैवश्राद्धम् भ्रात्रादिरप्यधिकारीकुर्यादित्येवार्थः तस्याभावेसुतः क्रमादितिपाठेपितदर्थस्य प्रतीयमानत्वाच्चेति । अत्रोच्यते असंस्कृतातुसंस्कार्याभ्रातृभिः पूर्वसंस्कृतैरित्यादिनाभ्र- त्रादयः पित्रभावेप्रतिनिधित्वेना विधीयन्तेप्रतिनिधेश्च सतत्रमी- कर्म्मयोगादितिकात्यायनपरिभाषायांपितृधर्म्मप्राप्ते भ्रात्रादिः पितृ- समानधर्म्मेति किञ्चतस्याभावइति अभावः पञ्चविधः प्रागभावः प्रध्वंसाभावः सन्निध्यभावः अधिकाराभावः अत्यन्ताभावश्चेति तत्रसंस्कार्येसतिप्रागभावात्यन्ताभावयोरसम्भवएव प्रध्वंसाभावस- न्निध्यभावाधिकाराभावानांसम्भवोस्तीति तत्रसर्वंचापिवचनबलात् पितुः पितृभ्यः प्रदानम्विधीयतेनसंस्कार्यपितृभ्यः तथाचस्मृतिः। पितरोजनकस्यैवयावद्व्रतमनाहितम् समाहितव्रतः पश्चात्स्वान्यजे- तपितामहानिति पितामहानितिपित्राद्युपलक्षणम् तथाब्राह्म- णयविहितेतातेपतितेसङ्गवर्जिते व्युत्क्रमाच्चमृतेदेयं येभ्यएवददा- त्यसावित्यादि यत्तुप्रेतेभ्योदद्यादितिवचनन्तदधिकारसम्भवविषयं

अधिकारस्त्वसहायत्वेनविवाहानन्तरम् स्वपितृभ्योदातुम्भवतीति तथाचऋष्यशृङ्गः नाश्नातियोद्विजोमांसं यस्यनोदारसंग्रहः तावेतौ मुनिभिः प्रोक्तौअनर्हौमखदूषकाविति नाश्नातिमांसंश्राद्धे । श्रुतिशेषः ननुच समाहितव्रतः पश्चात्त्वान्यजेतपितामहानित्यनेनोपनयनादूर्ध्वंस्वपितृभ्यो दातुमधिकारस्तत्कथं विवाहानन्तरमितिउच्यते उपनयनादूर्ध्वं स्वपितृभ्यो दातुं कर्त्रन्तराभावएकपुत्रविषयः कर्त्रंतरसद्भावेतु प्रतिनिधिभूतःसएवतदाद्यविवाह पर्यंतसंस्कार्यस्य पितृभ्यएवदद्यादिति तथाचसुमन्तुः श्राद्धं कुर्यादवश्यं तुप्रमीतपितृकोद्विजः व्रतस्थोवाव्रतस्थोवा एकएवभवेद्यदीति तस्मात्युक्तमुक्तस्पित्रभावेप्रतिनिधेःप्रतिधर्मं प्राप्य।संस्कार्यस्यपितृमातृपि तामहेभ्यः श्राद्धं दद्यादिति तथाचस्मृतिः नान्दीश्राद्धं पितादद्या दादेग्रपाणिग्रहेबुधः अतऊर्ध्वं प्रकर्त्तव्यम् स्वयमेवतुनांदिकमिति । अपरमपि पित्रोस्तुजीवतोःपुत्रः कुरुतेदारसंग्रहम् पितुर्नांदीमुखंप्रोक्तम् नपुत्रस्यकथञ्चनेति ननुपित्रोर्जीवतोरेव तत्पितृभ्योनान्दीमुखंप्रोक्तं मृतयोस्त्वन्यःकरोतीति तत्कथंसंस्कार्यस्यपितृणामतिक्रमो युक्तः सत्यं उद्वाहनादितत्रवधिनापितृपितृभ्यएवविधाना त्सतद्धर्मेतिपरिभाषया प्रतिनिषेधस्तदक्रमसत्र वाचनिकत्वात् अपिच वचनांतरं कन्यापुत्रविवाहेषु प्रवेशेनववेश्मनः नामकर्मणिबालानां चूडाकर्मादिकेतथा सीमन्तोन्नयनेचैव पुत्रादिमुखदर्शने नान्दीमुखम्पितृगणम् पूजयेत्प्रयतोगृही तिगृहएवोपदेशात् चूडाकर्मादिकइत्याद्यविवाहपर्यंतंवेदितव्यं तदूर्ध्वंतु द्वितीयविवाहादावपि सर्वत्रजीवत्पितृकःपितृपितृभ्योमृतक स्वपितृभ्यइतिविवेकः ततस्वायमर्थः पितास्वपुत्रस्यनिषेकादि विवाहपर्यंत संस्कारकसंसु स्वस्मात्पितृमातामहेभ्यःश्राद्धं कुर्यात् पितुरभावेसंनिहिते वाधि-

काराभावेवा तत्पूर्तिनिषिद्ध्ज्येष्ठभ्रात्रादिर्विवाहपर्यंतम् कर्मसुसं-स्कार्यस्वपितृभ्यएवकुर्यात् कर्त्रन्तराभावे उपनीतएकपुत्रःस्वयमेव स्वविवाहे स्वमातृस्वपितृस्वमातामहेभ्योदद्यात् विवाहानन्तरं जीवत्पितृकः पितृपितृभ्योदद्या न्मृतपितृकः स्वपितृभ्यएवेतिस-र्वमनवद्यम्।

इति श्रीश्राद्धकाशिकायां षष्ठीकण्डिका समाप्ता।

इत्यावसथिक श्रीमदतिसुखात्मज श्रीविष्णुमिश्रात्मजन्म
कृष्णमिश्रकृतौश्राद्धकाशिकायांसूत्र वृत्तौ।
आभ्युदयिकंश्राद्धं समाप्तम्॥

इत्थम्पार्वणादिसर्वंश्राद्धमभिधाया धुनातृप्तास्स्वेत्यादिना तत्प्र-रकृष्टार्थंत्वा त्तामन्तरेणासंतृप्ताःपितरोयांती त्यादिदोषदर्शना-दनेकविधद्रव्यैस्तां प्रतिपिपादयिषुःसूत्रमारभते॥

## मू॰ अथतृप्तिः। १॥

वक्ष्यतइतिसूत्रशेषः अथशब्दोऽधिकारार्थःआनंतर्यार्थस्वसूत्रास्वेल-व्धेः तेवग्राम्यारण्यौषधिमूलफलमृगपक्षिमीनादिनानाविधद्रव्यै-स्तृप्तिःश्राद्धेक्रियतेवक्तुमित्यर्थःतथाचादित्यपुराणं विविधान्नानिमां-सानि पितॄणान्तृप्तिकारणात्। दातव्यान्यनिषिद्धानि श्राद्धं चैवा-न्नमेवतद्धिति॥

## मू॰ ग्राम्याभिरोषधीभिर्म्मासन्तृप्तिः॥२॥

पितॄणामितिशेषः कालाध्वनोरितिद्वितीया अत्रतृप्तिरित्य-नुवृत्तौ पुनस्तद्ग्रहणमपाप्राप्त्यर्थं तेनौषधिजलाभ्यामेवतृप्तिर्नके-वलौषधीभिरित्यर्थः तथाचश्रुतिः आपोहवाओषधीना ऽँ॰ रस-स्तस्मादोषधयः केवलयः खादितानभिन्वन्त्योषधय उपहायाऽरस-

स्त्स्मादापःपीताः केवल्योनपिबन्ति यदेवीभ्यः सं स्पृष्टोभवंत्य-थैवविचिन्त्य तीत्यन्वयव्यतिरेकेणार्थवादइति ओषध्योधान्यानि। तथाचस्मृतिः दशग्राम्याणिधान्यानिभवंति व्रीहियवास्तिलमाषा अणुप्रियंगवोगोधूमाश्चमसूराश्च खल्वाश्चखलुकुलाश्चेति अयमर्थः व्रीहयस्तण्डुलधान्यानि तानिचश्वेतरक्तवर्णानि श्राद्धेदेयानि कृष्णधान्यानिसर्वाणि वर्जयेच्छ्राद्धकर्मणीतिनिषेधात् प्रचेतास्त्वाह कृष्णमाषास्तिलाश्चैव श्रेष्ठास्युर्यवशालयः महायवाव्रीहियवा स्तथैवचमधूलिकाः कृष्णाश्वेताश्चलोहाश्च ग्राह्यास्युः श्राद्धकर्मणि। एतद्व्याख्यातंमाधवीये यवाःसितदीर्घशूकाः महायवाव्रीहियवा श्चयवविशेषाः मधूलिकाधान्यभेदः कृष्णास्थलजाःकृष्णव्रीहयः रोहाःरक्तशालयः अन्यस्त्वाह मधूलिकायावनालजातिविशेषाः तद्विशेषणंकृष्णाः श्वेतलोहिताः महायवावेणुयवाइति अत्रकृष्ण-धान्यानिसर्वाणीत्यनेन विरोधान्माधवीयव्याख्यानमनुचितम् य-वादिद्विधा महायवाव्रीहियवाश्च तिलाःकृष्णाःकृष्णानिस्तुषामाषाः तथाचकृष्णमाषास्तिलाश्चेति अमेध्याःसतुषामाषानिस्तु-षापिमसूरिकेतिच अणुःक्षुद्रसस्यं प्रियंगुःकंगु स्तद्बहुवचनंपृथग्ग्रह-णंचभेदापेक्षं तथाचनिघंटुः पीततण्डुलिकाकंगुः प्रियंगुःकुकुरोमता सितकंगुस्तुमुसटी रक्तकङ्गुस्तुसाधिकः चनकः काककंगुःस्या च्छ्यामाकस्तृणवीजकइति मसूराःसतुषानिस्तुषाश्च नश्राद्धेदेयाः निस्तुषापिमसूरिकेत्युक्तेः खल्वाःखलकुलाश्चाप्रसिद्धाः कोद्रवच-णकौवाच्यौवागाग्यत्वात् दशेतिग्रामसंख्यान किन्तुहविष्यसंख्या तथाचविष्णुतिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैशाकैः श्यामाकैः प्रियंगुनीवारैर्गोधूमैर्मासमप्रीयन्तइति मसूरादिग्रहणाच्च तथा मासंतृप्तिःपितृणान्तु हविष्यान्नेनजायतइति क्षुद्रधान्यानिश्यामाक

प्रियंगुतिलगौररक्तसर्षपवर्ज्जंसर्वाण्यश्राद्धार्हाणि निरस्तत्वात् तथा-
च वर्ज्यामर्क्कटकःश्राद्धे राजमाषास्तथाणवः विपूयिकामसूराश्च
श्राद्धकर्मणिगर्हिताः भारद्वाजोपि निरस्तान्यपिसर्वाणि भक्ष्यभो-
ज्यानियानिच तानिस्युर्न्नैवदेयानि सर्वदाश्राद्धकर्मणीति अणवःक्षुद्रा
न्नानिकृष्णानि ह्वयाज्ञवल्क्योपि अकृष्टोराजमाषाश्च मसूराश्च-
णकास्तथा कोद्रवामूलकाराजसर्षपाः श्राद्धघातकाइति राजसर्षपो-
मोहरिः तथाचनिघण्टुः आसुरीराजिकाराज्ञीकृष्णिकाराजसर्षपाः
राजिकाभइत्यन्याराजिकाकृष्णसर्षपाइति चतुर्विंशतिमतेपि को-
द्रवाराजमाषाश्च कुलुत्थाश्चणकास्तथा निष्पावांस्तुविशेषेणपञ्चै
तान्वर्जयेत्सदा यावनालानपितथा वर्जयन्तिविपश्चितइति राज-
माषाःपीतगौरवर्णमाषाः लोबिया गोरवांसइतिमध्यदेशप्रसिद्धाः।
निष्पावावेल्लाः शिंबिसदृशादक्षिणापथप्रसिद्धः इतिकश्चित् चर-
कावनमुद्गाः यावनालाजोंधलीतिप्रसिद्धाः। तथाचनिघंटुःया-
वनालोदेवधान्यंजुदलिंजुन्नलोनलइति अतनिष्पावनिषेधःकृष्ण-
विषयः कृष्णधान्यानिसर्वाणीतिनिषेधात् यवव्रीहिसगोधूमौति-
लामुद्गाःससर्षपाः पियङ्गवःकोविदारा निष्पावाश्चावशोभनाइति
मार्कण्डेयेन कृष्णेतरस्यविहितत्वात् शोभनःकृष्णेतरः स्मृत्यन्तरे
मुद्गाढकीमाषवर्जंद्विदलानिदद्यादिति द्विदलानिदलितुंयोग्या-
निमुद्गःकृष्णः हरितमुद्गकृष्णमाषश्यामाकेति ब्रह्मपुराणेपि हरि-
तस्यविहितत्वात् माषोराजमाषः तद्ग्रहणंकुलुत्थाद्युपलक्षणम्।
तथाचमरीचिः कुलुत्थाश्चणकाः श्राद्धे नदेयाश्चैवकोद्रवाः कटुका-
निचसर्वाणि विरसानितथैवचेति। आढकीतुवरी अरहरीतिप्र-
सिद्धाः एतान्वर्जयित्वाद्विदलानिदद्यादित्यर्थः।नित्यस्तुवृत्तौ विष्णु-
पुराणे मसूरक्षारवास्तोक कुलुत्थशणशिग्रवइति शणशिग्वादि

शाकानि शाकप्रकरणेप्रपञ्चयिष्यन्ते चाणोयवचारादि शेषंस्मृति- भ्योविज्ञेयं एतानिधान्यानिनिस्तुषानि गव्यदुग्धादिसहितानिच मासंतृप्तिकराणि तथाच हेड्याज्ञवल्क्यमत्स्यपुराणयोः तुषहीनानि धान्यानि यान्तिसर्वाणिमेध्यताम् वर्जयित्वामसूरान्न मकुष्टान्रा- जमाषकान् मसूरादिधान्यत्रयं निस्तुषमपिअमेध्यमित्यर्थः । तथा अन्नंतुसदधिक्षीरगोघृतंशर्करान्वितं मासंप्रीणातिवैसर्वान्पितॄनि- त्याहकेशव: कलाया:सर्वेपिअग्राह्या: कलाया:सर्वएववेति व- क्ष्यमाणत्वात् ॥

## मू० तदभावआरण्याभिः ॥ ३ ॥

ग्राम्याभावआरण्याभिरोषधीभि र्मासन्तृप्तिः पितॄणामित्यर्थः । आरण्या अरण्येभवाःश्यामाकप्रभृतयः आरण्या ण्यौवक्तव्याइति णप्रत्ययः तथाचमार्कण्डेयः राजश्यामकश्यामाकौ तद्वच्चैवप्रसा- तिका नीवाराःपौष्कलाश्चैव धान्यानिपितृतृप्तयइति पुष्कलानी- वारविशेषाः विष्णुपुराणे व्रीहयश्चयवाश्चैव गोधूमाःकङ्गुसर्षपाः माषामुद्गाःसप्तमाश्च अष्टमाश्चकुलत्थकाः श्यामाकाश्चैवनीवा- रा जर्तिलाःसगवेधुकाः कोविदारसमायुक्ता स्तथावेणुयवाश्चये ग्रा म्यारण्याः स्मृताह्येता ओषध्यश्चचतुर्दशेति आद्याःसप्तग्राम्याः । अष्टमाद्याआरण्याः ॥

## मू० शाकमूलफलैरोषधीभिर्वा ॥ ४ ॥

अत्रानुपूर्व्या ओषधिशब्दःप्रथमंव्याख्येयः । तथाचोक्तम् अति रिक्तमदन्त्याज्यं हीनंवाक्येनिवेशयेत् विप्रकृष्टन्तुसंदध्या दानुपू- र्व्याविकल्पयेदिति वाशब्दोऽभावे ओषध्यभावे मूलफलादिनामासं तृप्तिरित्यर्थः । तथाचहेड्याज्ञवल्क्यः अन्नाभावेतुकर्तव्यं शाकमूल-

फलादिनेति अत्रपुनरौषधिग्रहणं आरण्यौषधिभावे विहितप्र-तिषिद्धौषधिप्राप्त्यर्थः। तथाचमार्कण्डेयः गोधूमैरिक्षुभिर्मुद्गैः स्तीनकैः श्यामाकैरपि श्राद्धेषुदत्तैःप्रीयन्ते मासमेकम्पितामहाइति। मुद्गावन्याःचीणकस्तृणधान्येषुकंगुभेदः उशनापि नीवारमाषमुद्गाश्चगोधूमाःशालयस्तथा यवाश्चचणकाश्चैव कंगुभेदःप्रशस्यतइति। ततश्चग्राम्याआरण्या विहितप्रतिषिद्धाःफलानि मूलानि पूर्वपूर्वाभावे उत्तरोत्तराणिक्रमेणग्राह्याणीत्यर्थः अथवासमुच्चयार्थमोषधीग्रहणंतेनौषधिसहितान्येवफलादीनि तृप्तिकराणीत्यर्थः तथाहिउत्तरसूत्रंसहान्नेनेति मनुरपि भक्ष्यंभोज्यंचविविधं मूलानिचफलानिच हृद्यानिचैवमांसानि सर्वन्दद्यादमत्सरीति मूलफलैरद्भिर्वेति पाठः तथाचसूत्रान्तरम् मूलफलैरद्भिर्वेति सर्वाभावेऽद्भिस्तृप्तिरित्यर्थः तथाच पराधीनःप्रवासीचनिर्धनोवापिमानवः मनसाभावशुद्धेनश्राद्धे दद्यात्तिलोदकम् अनुकल्पोपलक्षणञ्चैतत् तेनोपवासादिकमपिज्ञेयम् आपोनिषिद्धातिरिक्ताः। तथाचभरद्वाजः नक्तोद्धृतन्तु यत्तोयम्पल्वलाम्बुतथैवच वर्जयेदितिशेषः मार्कण्डेयोपि दुर्गन्धिफेनिलञ्चाम्बु तथाल्पप्रदरोदकं यन्नसर्वार्थमुत्सृष्टम् यच्चाभोज्यन्निपानजम् तद्वर्जंसलिलन्तातसदैवश्राद्धकर्मणीति मूलग्रहणान्दशविधशाकोपलक्षणम् तथाच मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् त्वक्पुष्पकवचञ्चेति शाकन्दशविधं स्मृतमिति। मूलंमूलकादि पत्रं पालक्यतण्डीवादि करीरम्वंशांकुरादि अग्रं आम्रपल्लवेत्रादीनां फलङ्कूष्माण्डादि काण्डंसार्षपवास्तुकादि अधिरूढकन्तालास्थिमज्जादि त्वञ्मातुलिङ्गादि पुष्पन्तिन्तिडीककाञ्चनादि कवचंशिलीन्ध्रादि॥ मार्कण्डेयः विदार्यैश्चभुरुण्डैश्च बिसैःशृङ्गाटकैस्तथा केन्दुकैश्चतथाकन्दैः कर्कन्धुबदरैरपिपालेव-

तैराजुकैश्चाप्यच्चौटैः पनसैस्तथा काकोलैःक्षीरकाकोलैस्तथापिण्डालुकैः शुभैः लाजाभिश्चशिलाभिश्च त्रपुसीर्वारुचिर्भटैः।
सर्षपैराजशाकाभ्यां इंगुदैराजतन्तुभिः प्रियालामलकैर्मुख्यैः।
फलुभिश्चातिलम्बकैः वेत्राङ्कुरैस्तालकन्दैश्चुक्रिकाक्षीरकावचैः
मोचैःसमोचैर्लकुचैस्तथावैबीजपूरकैः मुञ्जातकैः पद्मफलैः भक्ष्यभोज्यैःसुसंस्कृतैः रागखाण्डवचैश्चश्च त्रिजातकसमन्वितैः दत्तैस्तुमासम्प्रीयन्ते विधिवत्पितरोनृणामिति अस्यार्थः विदारीतस्याः कन्दसितिशिषद्गत्यन्वयः भुरुण्डोजलप्रभवः कन्दविशेषद्गतिमञ्जरीकारः केन्दुकःकचूराख्यशाकः जलप्रभवः कन्दविशेषद्गत्यन्यः।
बिसंमृणालम् शृङ्गाटकम् जलजंत्रिकण्टकफलं सिंघारद्गति प्रसिद्धः कन्दःसूरणकन्दः कर्कन्धुस्वादुवदरीफलम्बदरमन्यबदरफलं पालेवतञ्जम्बीराकारंफलङ्काश्मीरप्रसिद्धं आरुकं आरुकन्दः। अक्षोटःपार्वतेयपीलुफलम् पनसैः कण्टकिफलैः,कटहरद्गति प्रसिद्धैः काकोलैर्मधुराफलैः क्षीरकाकोलैस्तद्भेदैः,पिण्डालुकैश्चतुर्भेदैः।
तथाचमनुः पिण्डालुकमहागन्धंमध्वालुस्यात्तुरोमशं शङ्खालुशङ्खसङ्काशंकाष्टालुस्त्वल्पकाष्टकमितिलाजाभिर्भ्रष्टधान्यैः तथाचशंखः लाजन्नमधुयुतान्दद्यात्सक्तून्शर्करयासहेति शिलाशैलेयं त्रपुसंत्रपुसीफलम् उर्वारुस्वादुकर्कटी चिर्भिटः कटुककर्कटी सर्षपोगौरसर्षपशाकः राजशाकःशाकविशेषः कृष्णसर्षपशाकमिति माधवीये तन्न तस्यप्रतिषेधात् इंगुदस्तापसतरुः राजतन्तुः प्रियालोराजोदनम्। निघण्टोक्तेः प्रियालाद्राव्यावा फलुका काटुम्बरिकाफलम् अतिलम्बकैस्तालकदैस्तालमूलैः कन्दैः चुक्रिकाचिञ्चिकाफलम्।
तिन्तिडीफलमित्यर्थः। नागरखण्डातिन्तिडीतिह्यल्लरवचनात्।
तिन्तिरीकाफलाध्यचं मोचाकदलीफलम् लकुचैर्लकुचफलैः बी

जपुत्रकैः मुस्नातकैः पद्मफलैर्वदरइतिप्रसिद्धैः भक्ष्यंलड्डुकमोदकादि भोज्यव्यंजनमोदकादिसूपयुक्तम् रागखांडवाः रसालादिपानविशेषाः तथाचनिघण्टः मार्जिताशिखरिन्युक्ता रसालारभित स्तथा ओषधिषांडवाख्याचचतुर्जातकसंयुतेति चतुर्जातकं वक्ष्यमाणम् सुसंस्कृतैरितिमेलकविशेषैः तथाचसूपकारशास्त्रं अर्द्धाटकं सुचिरपर्युषित स्यदध्नःखण्डस्यषोडशपलानिशशिप्रभस्य सर्पिः पलम्मधुपलम्परिचद्धिकर्ष शुंठ्यापलार्द्धमथवार्द्ध पलञ्चतुर्णां सूक्ष्मपटेललनयामृदुपाणिपृष्टाकर्पूरधूलिसुरभिकृतभांडसंस्था एषावृकोदरकृता सरसारसालायास्वादिताभगवतामधुसूदनेने । चोष्यैराम्रादिकैःफलै त्रिजातकंलवंग एलागन्धपत्रमेलनं । तथाच निघण्टुः त्वगेलापत्रकैस्तुल्यै स्त्रिसुगन्धित्रिजातकम् नागकेसरसंयुतं चतुर्जातमुच्यतइत्यादि वायुपुराणे बिल्वामलकम्बद्दी कापनसाम्रा तदाडिमञ्चव्यपाखेवताक्षोट खर्जूराम्रफलानिच कसेरुःकोविदारश्च तालकन्दतथाविसं तमालंशतकन्दञ्च गन्धालुशीतकन्दकम् कालेयंकालशाकञ्च सुनिषण्डंसुवर्चला मांसशाकन्दधिक्षीरं वेचुवेत्राङ्कुरस्तथा वधूलःकिङ्किणीद्राक्षा लकुचम्मोचमेवच कर्कन्धुग्रीवकम्बारन्तिन्दुकम्मधुसाह्वयं नैकङ्कतनालिकेरं शृगाटक परूषमम् पिप्पलीमरिचञ्चैव पटोलंबृहतीफलं सुगन्धिमत्स्यमांसञ्च कलायाःसर्वएवहो एवमादीनिचान्यानि स्वादूनिमधुराणिच । नागरञ्चात्रवैदेयं दीर्घमूलकमेवचेति । अस्यार्थः मृद्वीकागोस्तनीद्राक्षा पनसोव्याख्यातः । आम्रातकःकपीतनः । चव्यञ्चविका । पारेवतमुक्तं । आक्षोटोप्युक्तः कसेरुर्भद्रमुस्ता । तालकन्तालमूलीति प्रसिद्धा । शतकन्दंशतावरी । गन्धालूःकर्चुरशाकम् । शीतकन्दं शालूकम् । कालेयकन्दारूहरिद्रा । करालाख्यशाकमिति गोवि-

न्द्रराजः। सुनिषण्णाविनुन्नशाकं। सुरक्तमीति ख्यातञ्जलभवं-शाकमितिकश्चित्। सुनिषण्णं वांगेरीसदृशशाकम्बा। वांगेरीस-दृशैः पत्रैः सुनिषण्णकमुच्यते। शाकञ्जलाशयेदेशेचतुः पत्रीतिगच्छ-न्तइति सुश्रुतोक्तेः। सुवर्चला ब्रह्मसुवर्चला। सूर्यावर्तइति गोवि-न्दराजः। वधुलःशोकर्णिका। किङ्किणीद्राक्षाच्छुद्रद्राक्षा। लकु-चोलिकुचः मोचाकदलीफलं कर्कन्धुरुक्तः गौवकञ्चकपुष्पंवार-म्प्रियाल विशेषः तन्दुकोसितसारः शृंगाटकमुत्तम् परुषकम्फे-लरूसइतिप्रसिद्धफलम् वृहतीविदिग्धिकालं वरीहटाइतिप्रसिद्धम् दीर्घमूलत्तिखिङ्करीफलम् मूलकमित्यन्यः पटोलोदीर्घपटोलोरा-जीफलमित्यर्थः चिचेण्डाइतिलोके यत्तु गम्भारिकापटोलानिशा-द्धकर्मणिवर्जयेदितिपटोलनिषेधः सचुद्रपटोलविषयः तथाचमित्र-एटः पटोलीयाद्वितीयान्याखादुपत्रफलावसेदिति शिष्टप्रसिद्धं कु-मारेश्वरसंवादेपि। पालेवतमम्लद्वीकाखर्जूरामलकसेरुका विल्वा-मलकमाचोटपनसाम्रातकानिच। वेत्रुर्वंशांकुराःशाकंलकुचम्मो-चमेवच शीतकन्दंविसन्नालिङ्करकन्धूलकन्तथा। इत्यादिमध्यम-न्यन्नप्रदेयंश्राद्धकर्मणि। वेत्रुःशणभेदःइतरस्यनिषेधात्। वेत्रुर्क-टाकंशाकमित्यन्यः वर्ज्यशाकान्याहविष्णुःभूस्तृणशिग्रु सर्षपसुर-सार्कजकूष्माण्डालाबुवार्त्ता कपालक्यतन्दुलीयककुसुमादिवर्ज-येदिति भूस्तृणोरोहिसःगन्धचणाख्यं शाकमित्यन्यःशिग्रुर्महिज-नाइतिप्रसिद्धं सर्षपोराजसर्षपः इतरस्यविहितत्वात् सुरसाश्वे-तनिर्गुण्डी अर्कजः श्वेतार्कजः कुहेरइतिप्रसिद्धः। पालक्यः पल-कीतिप्रसिद्धः तंदुलीयकश्चौराइतिप्रसिद्धं वार्त्ताकंश्वेतवृन्ताकं। उशना। नालिकाशणछत्राककुसुंभानांबुविड्वाम्। कुम्भीकम्बुक-वृन्ताकङ्कोविदारांश्चवर्जयेत्। वर्जयेद्गृञ्जनंश्राद्धे काञ्जिकम्पिण्ड-

मूलकं करंजं येपिचान्येवैरसगन्धोत्कटास्तथा । नालिका प्रसिद्धा । दीर्घनालाग्रैलापत्रवेतिमाधवीये कलाशिलिन्ध्रः कुम्भीश्रीपर्णिका कम्बुकं कलालाबु वृन्ताकं श्वेतं कोविदारश्च मकरकम् गृञ्जनोहरिद्रावर्णः पलांडुविशेषः कांजिकमप्रसिद्धम् करंजश्चिरिविल्वफलम् पुराणेपिवंशङ्करीरं पुरसं सर्जकश्च स्तृणानिच अवेद्योक्ताश्चनिर्यासालवणान्यौषराणिच । भरद्वाजोपि स्वल्पांबुकूष्मांडफलम्वज्रकन्दञ्चपिप्पली । विविकानिकरीराणि कोविदारगवेधुकाः । कुलत्थशणजम्बीरकरम्भाणितथैवच । अजाद्रन्यद्रक्तपुष्पं शिग्रुचारुतथैवच । एतानि नैवदेयानिसर्वस्मिन् श्राद्धकर्मणीति । पैठीनसिः वृन्ताकंनालिका पोतकुसुंभाश्मंतकाश्चेति शाकनामभक्ष्याइति । स्मृत्यन्तरं पिण्डालुकञ्चशुण्डीरङ्करम हूं स्वनालिकम् । कूष्माण्डंबहुवीजानि श्राद्धे दत्वाव्रजत्यधः । भविष्येपि लशुनंगृञ्जनञ्चैव पलाण्डुङ्कवकानिच वृन्ताकनालिकालाबुजानीया ज्जातिदूषिताइति । एषामर्थः । वंशङ्करीरंवंशांकुरः सरसंपर्णासइत्यन्यः सर्जकंशालफलम् । पीतसारकइत्यन्यः अवेद्योक्ताःनिषिद्धनिर्यासाः व्रश्चनप्रभवादयः । तथाचमनुः लोहितान्वृक्षनिर्यासान्व्रश्चन प्रभवांस्तथेति । लोहिताश्च निर्यासालाक्षादयः तेनपाटलश्वेतवर्णानां हिंगुकर्पूरादीनामनिषेधः । हिंग्वादीनां विषयमग्रे वक्ष्यामः औखराणिकृतलवणानि वर्जीस्तव्रमसूराश्वकोद्रवा लशुनकृतमितिरचनात् । सैन्धवसामुद्रादीनां विहितत्वात् । तथाच लवणेसैन्धवसामुद्रे इति अपिच सैन्धवंलवणं यच्च यच्चमानससम्भवं । पवित्रे परमेह्येतेप्रत्यक्षे अपि नित्यशः मानससम्भवंसांभरीति प्रसिद्धमिति । हलायुधः करीरं गूढपत्रङ्करीलइतिप्रसिद्धम् कोविदारएतः वज्रकदम्बोद्भवः । सूरणगवेधुका शणांशणपत्राणि । जंबीरोदन्तशठफलम् करम्भाणि

चारयवचारसौवर्च्चलं सौवर्च्चकादिलवणानि । पीतम्पीतिका-
शाकम् अश्मन्तकोमहोलीटइति प्रसिद्धस्तच्छाकम् । वृन्ताकंश्वेतं
तथाचदेवलः काडूरंश्वेतवृन्ताकं कुष्माण्डञ्चविवर्जयेत् । उपमन्यु-
रपि नाश्नीयाच्छ्वेतवृन्ताकं मातुलानींतथाण्डकं अण्डकञ्छत्राकं
मातुलानिभङ्गेति काडूरंकपिकच्छूः । तत्फलङ्खर्जूरफलमित्यर्थः ।
कुष्माण्डंगन्तालाबुसदृशफलम् पिण्डालुपेडरुइतिप्रसिद्धं शुण्डीरं
करमर्द्दः करवन्दफलानि । वहुवीजानिवहुबीजपूरकादीनि
पलाण्डुःश्वेतकन्दः पलाण्डु विशेषः लशुनन्दीर्घपत्रञ्चपिच्छाग
सोमहौषधम् । करश्यश्चपलाण्डुश्च लताक्षाश्चपराखिका ।
गृञ्जनम् पतनेष्टश्च पलाण्डोदशजातय इति सुश्रुतोक्तेः । कवलं
शिलीन्ध्रः कुमारसंवादेपि वर्ज्योस्तचमसूरास्तुकोद्रवालवणाकृतं ।
भूस्तृणंसरसंशिग्रुम्पालक्यासुमकं तथा । पिण्डंमूलञ्च वंशाग्रं
लोहितंव्रश्चनानिच । पलाण्डुंविड्वराहच छत्रा कंग्रामकक्कुटं
लशुनंगृञ्जनं जंबूफलानिकवकानिच तण्डूलीयक मुद्दालराज-
माषासुरीरपि । कृष्णाजात्यतसीतैलम्भयश्च जाविका दिकमिति
सुमकङ्कादिरीसंज्ञक खुलभवंशाङ्कुद्दालःकोविदारः आसुरीरा
जिका । कृष्णाजातीकृष्णजीरकः करोञ्जीतिप्रसिद्धश्च अतसी-
चुमा शेषम्प्रसिद्धं हारीतः नवटंप्लक्षौदुंवरदधित्थनील मातुलिङ्ग-
फलानिभक्षयेदिति । प्लक्षःपर्कटीः दधित्थः कपित्थःमातुलिङ्गो-
वीजपूरकः अत्रै तच्चिन्त्यते । किम्पिप्पलीमरीचहिंगूनां निषेधः
उतविधिः उभयथावचनदर्शनात् । तथाचविष्णुः पिप्पलीसुमक-
भूस्तृणेत्यादि शंखोपि पिप्पलीमरिचञ्चैव तथावैपिण्डमूलकम् ।
कृतन्तुलवणंसर्वंसाग्रं शिग्रुञ्चवर्जयेत् व्यासः अश्राद्धेयानिधान्या-
निकोद्रवापुलकास्तथा हिंगुद्रव्येषु शाकेषुकालानाश्चशुभास्तथा

द्रव्येषु हिंगुशाकेषु कालानश्चशुभानिच निषिद्वेत्यर्थः पुलकाद्र-
स्वक्छान्दसः। कालानलः कृष्णार्जकः कुठेरइतिप्रसिद्धः शुभाशुभा-
ख्यःशाकविशेषः इत्यादिनिषेधः विधिस्तुपिप्पलीमरिचञ्चैवपटोलं
बृहतीफलमितिवायुपुराणे कुमारेश्वरसम्बादे पिप्पलीमरिचंहींगुप
टोलंबृहतीफलमित्यादि आदित्येपुराणेऽपि मधूकं रामठञ्चैवकर्पू-
रंमरिचङ्गुडमित्यादि रामठंहिङ्गुः एवंबचनविप्रतिपत्तौकेचिदाहुः पि
प्पलीमरिचं हिंगूनांसंस्कारकत्वेनविधिर्युक्तःप्रतिभाति केवलाना-
म्प्रतिनिषेधः अपरेतु संस्कारान्तराभावेविधिरन्यथानेत्याहुः। षोड-
शीग्रहणाग्रहणवद्विकल्पइत्येके एवञ्चसतिसंस्कारकत्वेन विधियुक्तः
प्रतिभात्ति । संस्कारत्वेनस्वादूनिमधुराणिचेतिस्वादुत्वविधित्वो
पपत्तेः तथाच शुंठीमरीचम्पिप्पल्योधान्यकाजाजिहिङ्गुकम् पिप्प-
लीमूलसंयुक्तसंस्कारइतिस्मृतमिति शङ्खः कृष्णाजाजीविडञ्चैव-
सीतपाकीतथैवच वर्जयेल्लवणं सर्वंतथाजम्बूफलानिच । कृष्णाजा
जीकृष्णजीरकः बिडंविडाख्यम् । लवणं सर्वंसैन्धवसामुद्रसाम्भरि-
व्यतिरिक्तम् ब्रह्माण्डपुराणे आसनारूढमन्नादांम्पादोपहतमेव
चयमेध्यादागतै। स्पृष्टम्भुक्तम्पर्युषितञ्चयत् द्विःस्विन्नम्परिदग्ध-
ञ्चतथैवाग्रावलेहितम् शर्कराकीटपाषाणैःकेशैर्यच्चाप्युपद्रुतम्
पिण्याकम्मथितञ्चैवतथातिलवणञ्चयत् सिद्धाःकृताश्चयेभक्ष्याः-
प्रत्यक्षलवणाकृताः वाग्भावदुष्टांश्चतथादुष्टैश्चोपहृतांस्तथा वास-
साचावधुतानिवर्ज्यानिश्राद्धकर्मणीति आसनारूढमासनोपरिकृतं
पादोपहतंपदास्पृष्टम् अमेध्यादागतैःचर्मकारादिअपवित्रस्थाना-
दागतैरशुद्धैःस्पृष्टम् द्विःस्विन्नन्द्विः पक्कम् परिदग्धमतिदग्धम् अ-
ग्रावलेहितंश्राद्धात्पूर्वमास्वादितम् पिण्याकन्तिलकल्कःमथितञ्चरे-
णविलोलितन्निर्जलन्दधि करेणमथितन्दधीतिनिषेधात् मथि-

तत्साक्रमित्यन्वयः। सिद्धाभक्ष्याः आमलकादयः पृथक् लवणेन मिश्रिताः तथा दधिशाकं तथाभक्ष्यं शुक्रस्त्रौषधिवर्जितम् वर्जयेच्च तथान्यत्तु सर्वानभिषवानपि अभक्ष्यं दधिशाकञ्च वर्जयेदित्यन्वयः। अन्यन्निषिद्धमित्यर्थः अभिषवाः सन्धानानि शुक्तमनम्लं वस्तु कालान्तरेण द्रव्यान्तरेवात्यम्लत्वस्वभावतोऽत्यम्लम् तथाच बृहस्पतिः अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिरिति अत्रापवादः श्रङ्खेनोक्तः दधिभक्ष्यञ्च शुक्तेषु सर्वं च दधिसम्भवम् क्षीरसपक्वं भक्ष्यं स्यात्सर्पियुक्तमिति स्थितिः अनग्निकमुष्मा क्षीरसन्तेन पक्वमाषादि घृतयुक्तं भक्ष्यमित्यर्थः। वायुपुराणेपि भक्ष्याण्येव करम्भाश्च दृष्टका घृतपूरिका कृशरीमधुसर्पिश्चपयः पायसमेव च दधिगव्यामसंसृष्टभक्ष्यान्नानाविधानपि। शर्कराक्षीरसंयुक्ताः पृथुकानित्यमक्षयाः। सक्तूल्लाजांस्तथापूपान्कुल्माषाव्यञ्जनैः सह। सर्पिः स्निग्धानि सर्वाणि दध्नासंस्कृत्य भोजयेत् श्राद्धेष्वेतानि यो दद्यात्पितरः प्रीणयन्ति तमिति करंभा दध्युक्ताः सक्तवः इष्टकाः कासारखंडानि पृथुकाश्चिपिटाः असंसृष्टभक्ष्याः स्वकीयभक्ष्या लाजा भ्रष्टव्रीहितण्डुलाः अपूपाः मण्डकाः कुल्माषो यावकाः एतानि पर्युषितान्यपि घृतस्निग्धानि दध्ना मधुना च संस्कृतानि भक्षयेदिति पर्युषिता पक्वादन्नत्यर्थः यत्किञ्चिन्मधुनामिश्रं गोक्षीरघृतपायसैः दत्तमक्षय्यमित्याहुः पितरः पूर्वदेवता इति मत्स्यपुराणवचनादित्यलम्बहुनाशेषं स्मृतिभ्योनुसन्धेयम् अन्नाभावे फलमूलैस्तृप्तिरित्युक्तं तत्रोपायविधिमाह॥

## मू० सहान्नेन नरास्तर्पयन्ति॥ ५॥

फलमूलैरन्नेन सह नराः पितॄंस्तर्पयेयुर्न केवलैरित्यर्थः लटोलिङर्थत्वात् अत्रान्नेनेति तृतीययैव सहार्थे लब्धे सहेति ग्रहणं विस्प-

ष्टार्थन्नाम्नस्याप्राधान्यार्थं अथसहयुक्तेप्रधानइतिपाणिनिस्मरण-विरोधादस्यस्यकथमप्राधान्यं नेति उच्यते अविवक्षितत्वेनास्यदो-षपरिदूषितत्वात् तथाच विवक्षस्यहिशब्दस्यप्रधानङ्कारणन्नचा-स्तुसतेति नचान्नमन्तरेणाहृप्तौमूलफलादेःसामर्थ्याभिप्रायः प्रधा ननगुणसम्भावसम्भवोपत्ती तस्माद्विस्पष्टार्थमेवसहेतुरक्तं। सहा-न्नेनोत्तरास्तर्पयन्तीतिक्वचित्पाठस्तत्रोत्तरामूल फलादयस्तेनैवस-हतर्पयन्तितृप्तान्कुर्वन्तिनकेवलानित्यर्थः एवंनहिंस्यात्सर्वभूतानी-त्यहिंसाधर्मेणतृप्तिमभिधायेदानींहिंसाधर्मेणाह।

## मू॰ छागोस्रमेषानालभ्य ॥ ६ ॥

छागोर्बर्करःउस्रस्तूपरः सचशृंगहीनछागादि तथाचश्रुतिः स्तूपरोवाअविषाणइति,मेषोमेढ्रः एतान्पितृद्देशेनहत्वापचेदित्य-र्थः तथाचात्रिः मधुपर्केचसोमेचदैवेपित्र्ये चकर्मणि अत्रैवपशवोहिं-स्यान्नान्यत्रेतिकथञ्चन स्कन्दसंवादेपि अर्थेदैवपितॄणांहियोहिन-स्तिपशून्द्विजः सयज्ञफलमाप्नोतितेचयान्तिपराङ्गतिम्। जाबालो-पि हिनस्तितयःपशून्स्वार्थमुद्दिश्यैवसपापभाक्। आज्ञापदेशतोहिं-सन्नपिस्वार्थेनदुष्यतीति अत्रैकआहुः। उस्रोवलीवर्दः तथाच म-होक्षंवामहाजंवाश्रोत्रियायोपकल्पयेदिति तदयुक्तम् महोक्षत्व-शब्देनतूपरस्योक्तत्वात् तथाचजाबालः विषाणोद्भवकालेतुयोवि-षाणविवर्जितः तंमहोक्षंवदन्त्यार्यास्तूपरञ्चापिपावनमितिमहो-क्षःपक्षीवामहोक्षइतिप्रसिद्धः तथाचजातूकर्ण्यः किञ्चिल्लोहित-वर्णोहिदीर्घग्रुच्छोगुरुस्वरः ह्रस्वचञ्चुटित्वयःपक्षीसमहोक्षेतिपाठन-इति किञ्च वृषस्याभक्ष्यत्वमुक्तम् तथाचेश्वरः साक्षाद्धर्मोवृषः-प्रोक्तोमन्मूर्तिर्ममवाहनः तंयदापिद्विजोहन्तितेनाहंस्कन्दताडितः

बुद्धदेवलोपि वेसरांश्चगजश्चांश्चवृषभाश्चकरिमाचलं रासभश्चाप्यच-भवेद्विट्कृमिर्वाभवेभवद्रुति करिमाचलः शृगालः। उष्ट्रःशतवच्छि-न्नामद्भुत्यनेः उष्ट्रःशतवलादुष्ट्रस्तूपरोत्त्चगभक्ष्यितिष्वित्यभिधानात्। तदपिन पश्वालम्भप्रकरणात् नहन्यान्मत्स्यसूकराविितिनिषेधात् अतस्त्रोस्त्रशब्देनकलौछागमेषावेव पशुपञ्चकमध्येतयोरेव भक्ष्य-त्वाद्वचनोक्तत्वाच्च तथाचश्रुतिः पुरुषोश्वोगौरविरजोभक्ष्येताव-न्तोवैशर्वेपशवद्रुति गोभिलसूत्रञ्च छागोस्त्रमेषाआलभ्याद्रुति। ननुचछागमेषग्रहणेनैवतल्लब्धेः किमर्थमुस्त्रग्रहणं उच्यते विशेष-विध्यर्थत्वादित्यदोषः। तथाच स्कन्दसम्वादे वाध्रीनसस्यश्चाश्च लकोलाहाजस्तुपरंघृतमिति। ददद्यादेतद्धवेदत्तं मानव्यायतिला-मधु अन्यच्च अनन्ताखड्गमांसेनलोहछागाच्च नूपरादिति। अत्र-कश्चिन्नाप्यक्तदाह। छागोस्त्रमेषानिति पुंस्त्वमविवक्षितं उपादीय-मानत्वा त्पशुनायजेतेतिवत् सर्वासांपशुजातीनांमारणंभक्षण-न्तथा। विधानेतुनदोषस्स्यादन्यथामरकंव्रजेदिति। अन्येत्वाहुः पशुनायजेतेत्यत्रापिपुंस्त्वस्यैवविवक्षितत्वात् पुंव्यक्तिरेवध्यानस्त्री-व्यक्तिरिति। अत्रानूचानाः प्रमाणम्॥

## मू॰ क्रीतालब्ध्वावाऽस्वयम्मृतानाहृत्यपचेत् ७

वाशब्दःपशुवध्याभावे अस्वयंमृतग्रहणम्। निषिद्धवर्जनोप-लक्षणं तेनपश्वभावेविहित मृगपक्ष्यादिमांसानिक्रय लाभाभ्या-माहृत्यपचेन्न निषिद्धमित्यर्थः। विनामांसेनयच्छ्राद्धं कृतमप्यकृतंभ-वेदिति। श्राद्धवैकल्यापत्तेः पद्मपुराणे विनामांसेनयच्छ्राद्धन्तन्न तृप्तिकरम्भवेत्। क्रव्यादाः पितरोयस्मात्तस्मात्तेनैव तान्यजेदिति अत्रैकेअकारविश्लेषम बुध्वास्वयंमृतानपिपचेदित्याहुः। तदयुक्तं

तेषांनिषिद्धत्वात् तथास्मृतिः उच्छिष्टस्यघृतादानंस्वतमांसस्यभक्षणम् अगुल्यादंतकाष्ठञ्चतुल्यंगोमांसभक्षणैः तथा शणशाकञ्च मृतस्मांसञ्चरीणमथितंदधिअगुल्यादन्तघर्षंचतुल्यङ्गोमांसभक्षणैरिति महाभारतेपि विषकच्छहतस्यैवव्याधितिर्यग्घतन्तथा नप्रशंसन्ति वैश्राद्धे यच्चशस्त्रविवर्जितम् विषकच्छारण्येपतितपत्नादौविषप्रक्षेपस्तेनहतं तिर्यग्घतंसंहालि रिक्तहकादिहतं तयोरप्यनुज्ञानात्। तथाचसिंहव्याघ्रहतंचयत् इति प्रशस्तमितिशेषः अथवाश्राद्धेतस्यापिनिषेधोविधिर्नित्यभोजनविषयः एकमूलकत्वात् शस्त्रविवर्जितंस्वयंमृतं अनुपाकृतमांसानिसौनंवल्लूरमेवच स्मृतिलोकनिषिद्धांश्चमृगमीनाखण्डजानपि सौनंहिंसास्थानभवम्। अनुपाकृतंसंस्कारहीनम् वल्लूरंशुष्कंवर्जयेदिति। पृष्टमांसंवृथामांसंवर्ज्यंमांसच्चपुस्तक। नभक्षयन्तिसततम्प्रत्यचलवणानिचेति। मार्कण्डेयः। पृष्टमांसम्मैरइतिप्रसिद्ध' तथाचवामनपुराणे पृष्टमांसाशिनोमूढास्तथैवक्रौञ्चजीवनः क्षिप्यन्तेवृषभक्ष्येतेनरकेरजनीचरोक्त शेषमन्यतोज्ञेयम् ननुवाफलमूलैरौषधीभिर्वेत्यहिंसाधर्मेणाटहिमुक्त्वानन्तरंछागोस्त्रमेषानालभ्येति हिंसाविधायेदानीं क्रयलाभौसूचयतावाशब्देनहिंसानिषिद्धेति। तथाच कन्दमूलफलाभावेमांसान्याहुर्मनीषिणः पुण्यानिमुनिगीतानिलब्धानिच वधम्बिनेति। चतुर्विंशतिमते महाभारतेपि क्रीत्वास्वयम्वाप्युत्पाद्यपरोपहृतमेववा। देवान्पितृनर्च्चयित्वाखादन्मांसन्नदुष्यति एषउक्तोविधिर्ब्राह्मः। सर्वकामफलप्रदइति तस्माद्वाशब्देन हिंसान्निषिध्यक्रयलाभावेव सूत्रकाराभिमताविति। अत्रोच्यते यदुक्तं। हिंसानन्तरंक्रयलाभौसूचयताहिंसानिषिद्धेति। तन्न पशुबन्धासम्भवेक्रयलाभयोरनुज्ञात्वात् तथाचस्कन्दसम्वादे। मांसाभावेकृतेश्राद्धे ध्यायन्तेपितृ-

देवताः करिष्यतिसुतोलब्ध्वाश्राद्धं पश्चात्तमामिषं । ददातिलब्ध्वामांसन्नतंशपन्तिरुषामुहुरिति मांसाभावेपश्वसंभवे । यत्वभिहितं कन्दमूलफलाभावइत्यनेन हिंसानिषिद्धेति तदप्ययुक्तं । कंदमूलफलाद्यभावेवधंविनेत्यहिंसाधर्मेण प्रतिपादकत्त्वान्नहिंसानिषिद्धेति । यच्चाभ्यधायिक्रीत्वास्वयंवाप्युत्पाद्येत्यादिनाब्राह्मविधिरिति तदपिमन्दमिति तस्याप्यमांसभुग्दाक्षिणात्यपरत्वेनतद्देशविषयत्वात् दृश्यतेच देशविषयात्याचारः तथाच बृहस्पतिः । उदुह्यतेदाक्षिणात्यैर्मातुलस्यसुताद्विजैः । मध्यदेशेचर्मकाराः शिल्पिनः खगवासिनःमत्स्यादाश्चनराः सर्वेगच्छन्तिरांरजस्वलाः । पर्वतेमद्यपानार्यानेतेदण्डस्यचार्हकाइत्यादि पठन्तिच पृथिव्यास्त्रिषुभागेषुमांसभक्षण माचरेत् यत्तु बृहत्प्रचेतोवचनम् । नदेशानांनविप्राणांनयुगानांद्विजोत्तमाः । धर्म शास्त्रेषुवैभेदोदृश्यमांसभक्षणइति । तद्दक्षिणव्यतिरिक्तदेशविषमित्यविरोधः किञ्चयद्येवन्नामभविष्यतद्यग्नीषोमीयम्पशुमालभते छागोस्यमेषानालभ्येत्यादिविहितहिंसाप्रतिपादकानिवाक्यान्यनर्थकान्यभविष्यन्निति तस्मात्पशुवधासंभवेक्रीत्वालब्ध्वेति सूक्तमितिसिद्धं । इदानीं च्छगोरभ्रकिरिच्छागपर्षतेरूपतत्रिणाम् । मांसंविशाणशशयोरुरीस्वक्रमतः सुरान् धिनोतिचपितृंश्चैवमांसान्पायसमेवचेत्यादिवचनविहितांतृप्तिमुपक्रमते ॥

## मू॰ मासद्वयन्तुमत्स्यैः ॥ ८ ॥

मत्स्याःपाठीनादयोविहिता ननिषिद्धाः तैर्द्विमासंतृप्तिरित्यर्थः । तथाचमनु । द्वौमासौमत्स्यमांसेनेति तुशब्दोविशेषणार्थः तेनमत्स्यविशेषेकालविशेषइत्यर्थः तथाचापस्तंबः शतवलमत्स्यस्यमांसेना-

घस्मात्तृप्तिरिति यत्तु मत्स्यैश्चतुरोमासानिति पैठीनसिवचनन्तच्छ-
शल्कविषयम्। तथाचयमः। शशल्काश्चतुरोमासानिति। प्रीण-
यन्तीतिशेषः। ननुचमत्स्यांश्चकामतोजग्ध्वासोपवासस्त्र्यहंवसे
दिति प्रायश्चित्तस्योक्तत्वात् कथमेवमिति उच्यते तस्यानित्यभोज-
नविषयत्वाद्दैवपित्र्यनिवेदनविषयत्वाच्च तथाचागस्त्यः। कृतेयो-
हव्यकव्याभ्यांमत्स्यमांसंसमश्नुते लभतेपातकंनसौसर्वमांसाशिनां-
नृणाम्। कारवोपि। कालशाकञ्चमत्स्यांश्चपरमान्नन्तिलोदनं।
अनिवेद्यनभुञ्जीतपितृणांदैवतैः सहेति एवंतर्ह्येकतः सर्वमांसा-
निमत्स्यमांसानिचैकतः एकतः सर्वपापानिब्रह्महत्यातथैकतः।
तथा मत्स्यादः सर्वमांसादः इत्यादिवचनद्वन्द्वनिरर्थकमिति मैवं-
वोचः कार्तिकादिकालविशेषविषयत्वेनसामर्थ्यकत्वाद्दक्षिणादि-
देशेनिषेधकत्वाच्च। तथाचनारदीये नमात्स्यमश्नीयान्मांसंनकौर्मं-
नान्यदेवहीतिकार्तिकादिवैष्टावकालइतिशेषः। मत्स्यादाश्चनराः
सर्वइति मध्यदेशे बृहस्पतिनोक्तं। किञ्चएकतइत्यर्थान्तरम्। स-
र्वमांसानिभक्ष्याणिमांसान्येकतस्तथा भक्ष्यमत्स्यमांसानिचैकतः तथा
पापानिसर्वयज्ञाः एकतइज्याब्रह्मज्ञानंचैकतेति पापायज्ञादिक-
कर्मेति शब्दरत्नावली इलायांब्रह्मनेज्यानइति चन्द्रगोमी एकतश्च
शादिसर्वमांसान्येकतमत्स्याएकतसर्वयज्ञा एकतब्रह्मज्ञानमेकतस्तु-
लायांसमानमित्यर्थः। तथाचप्रचेताः याश्चितृप्तिः पितृणांस्यादजवा-
र्ध्रीनसादिभिः साभवेन्मत्स्यमांसेनदत्तेनश्राद्धकर्मणीति तस्माच्छ्र-
द्धेमत्स्यैः पितॄन्सन्तर्प्यस्वयमपि भुञ्जीतेतिनिरवद्यम्। तथाचब्रह्म-
पुराणम् हव्यकव्यार्थतो विप्रान्भोजयित्वाविधानतः वैसारिणां-
स्तुभुञ्जानोनलिप्येतनसाद्विजइति। मत्स्यानाहयाज्ञवल्क्यः राजी-
वान्राजतुण्डांश्चसशल्कांश्चैवसर्वशः शङ्खोपि राजीवान्सिंहतु

गडांश्च सशल्कांश्चविशेषतः। पाठीनरोहितौ भक्ष्यातेमत्स्येष्वतिपावनाइति। राजीवाःपद्मवर्णाः सिंहतुण्डासिंहमुखाः सशल्काःशुक्त्याकारावयवयुक्ताः जातूकर्ण्योपि शशश्चमत्स्येष्वपिहि सिंहतुण्डकरोहिताः। क्षुद्रमत्स्येषुकेकेतिमेध्यो रोहितकस्मतइति निषिद्धमत्स्यानाहसएव। गोमत्स्योगुच्छमत्स्यश्च चर्मकाराह्वयस्तथा नैतेद्विजातिभिर्भक्ष्यास्तथा चिलिचिमाभिधः। शृङ्गीनकेचिदिच्छन्तिप्रशस्तान्हव्यकव्ययोः अयंविकल्पोनित्यभोजने व्यवस्थितः। प्राघुणकादौ तथा मत्स्यश्चिलिचिमो नाम नभक्ष्योहिद्विजन्मनां श्चिलिचिमः सितगौरोनक्राङ्गसदृशः समुद्रजइत्यायुर्वेदः। नान्यावर्तालिमत्स्यइल्लिसइवांग विकराटकगाहिप्रभृतयः क्षुद्रमत्स्याश्चस्मृत्यन्तरेतावदेवावगन्तव्याः॥

## मू॰ मासत्त्रयन्तुहारिणेन॥ ९॥

हरिणस्तामृगस्तन्मांसेन त्रिमासन्तृप्तिरित्यर्थः। एषः कृष्णमृगः प्रोक्तस्ताम्रोहरिणउच्यतेइति सुश्रुतत्वात्। कृष्णसारेणाधिकतृप्तेः तथोचोशनाः चतुरोमासान्कृष्णसारेणेति। यत्त्वष्टावेणेयेणेतिपैठीनसिनोक्तम् अष्टावेणेयमांसेनेतिच मनुनातन्नूपरकृष्णसारविषयेभवितुमर्हति। तूपरस्यविशिष्टोक्तेः अन्यथोशनसाविरोधात्। तथाचोक्तम् स्मृतिद्वैधेतुविषयः कल्पनीयः पृथक्पृथगिति। तुशब्दोविशेषार्थः तेनमृगविशेषेकालविशेषइत्यर्थः। तथाचमार्कण्डेयः करोतितृप्तिंनववैकरी मांसंनसंशयः। रुरुःशम्बरः शरदिगलितशृङ्गइत्यायुर्वेदः। मनुरपि रौरवेणनवैवतु यत्तु रुरुः प्रीणातिपञ्चवेइति यमोक्तंयच्चपञ्चरौरवेणेति। गोभिलसूत्रम् तद्बहुशाखशृङ्गरुरुविषयं यत्पुनर्देवलेनोक्तम्। त्रीन्मासान्रुरुभि

मृगैरितितद्धरिणसदृशरुरुविषयम्। नचयथा गृह्यविषयोविकल्पः शक्यतेवक्तुं गृह्याणामनेकत्वात्तद्विषयानुपलब्धेः। तस्माज्जीवविषयोविकल्पोभवितुमर्हति। मार्कण्डेयः पुष्णातिचतुरोमासान्शशस्य पिशितंपितृन्निति यत्तुदेवलेनोक्तान् शशैःषण्मासिकीतृप्तिरिति शशःप्रीणातिषण्मासानितियमेनतद्वृहच्छशविषयमिति अविरोधः अन्यथाविरोधाद्धर्मबाधापत्तेः। तथाचव्यासः धर्मंयोवाधतेधर्मोनसधर्मः कदाचन। अविरोधात्तुयोधर्मः सधर्मः सद्भिरुच्यते। तस्माद्विरोधेधर्मस्यनिश्चित्यगुरुलाघवं। ततोभूयस्तरं विद्वान्कुर्याद्धर्मविनिर्णयं तत्वेविप्रतिपन्नानां वाक्यानामितरेतरं। विरोधपरिहारोदनिर्णय स्तत्वदर्शिनइति। नचश्वापदजातेरनेकत्वादेवं नघटतइतिवाच्यम्। तथावामनः कदलीकन्दलीचीनश्चमूरुप्रियकावपि समुरुश्चेतिहरिणाश्च्मी अजातयोनयः। कृष्णसाररुरुन्यंकुरं कुशम्बररोहिणाः गोकर्णपृषतैणस्य-रोहिताश्चमरीमृगाः गन्धर्वःशरतोरामसृगयोगवयः शशादूत्यादयो मृगेन्द्राद्याइति। एवमन्यत्रापि॥

## मू॰ चतुरऽऔरभ्रेण॥ १०॥

पितॄणान्तृप्तिरित्यर्थः। तथाचमनुः अरस्रणोथचतुरइति उरभ्रआरण्यमेषः नवमेषमांसेनेति ग्राम्यस्यवच्यमाणत्वात्। अन्येशाकुमेषएवेति। तदयुक्तम् स्मृतिविहितत्वात्पौनरुक्त्यदोषाच्च तथाचस्मृतिः। वरुणायारण्योमेषइति यत्तु मेषेणमञ्चमासानिति पैठीनसिनोक्तम्। तदारण्यरूपविषयं अत्रैतत्सन्दिह्यते किंगवयमांसंभक्ष्यमभक्ष्यञ्चेति तत्रैकआहुः विहितत्वाद्भक्ष्यमिति तथायमः। गावयंरुद्रसम्मितात् एकादशमासांस्तृप्यन्तीतिशेषः मार्क-

षडेयोपि गवयस्यतुमांसेनतृप्तिःस्याद्दश मासिकीति तदयुक्तम् स्मृतिविरुद्धत्वात् तथाचस्मृतिः । सयंपुरुषमालभन्तस किंपुरुषोभव द्यावश्वंगाञ्चतौगौरश्चा गवयश्चाभवनांयम विमालभन्तसउष्ट्रो-भवद्यमजमालभन्त सशरभो भवत्तस्मादेतेषां पशूनांनाशितव्यम-पक्वान्नमेधाह्येतेपशवइति । श्रुतिस्मृतिविरोधेतु श्रुतिरेवबलीयसी-तिश्रुतेर्बलवत्त्वाच्च । नचश्रुतिविरुद्धस्मृतिरादरणीया तथाचचतु-र्विंशतिमतं स्मृतिर्वेदविरोधेन परित्याज्यायथाभवेत् । तथैवलौ-किकंवाक्यं स्मृतिबाधापरित्यजेदिति श्राद्धविषयत्वेन गवयस्यवि-धिरित्यन्ये । अत्रानूचानाःप्रमाणम् ॥

## मू० पञ्चशाकुनेन ॥ ११ ॥

शाकुनिर्भक्ष्यपक्षीतन्मांसेनेत्यर्थः । तथाचमनुः शकुनेनाथप-ञ्चैवइति । यत्तु शाकुनैश्चतुरोमासानिति देवलेनोक्तम् यच्चचतुरः शाकुनेनेतिचगोभिलेन तद्विहितप्रतिषिद्धहारीतादि पक्षिविषयं यच्चशकुनेनसप्तेति पैठीनसिनोक्तम् तदतिपवित्रकपिञ्जलादि पक्षिविषयं सोमपानोद्भवत्वेन पावित्र्यात् । तथाचश्रुतिः सयत्सो-मपानमासततः कपिंजलःसमभवदिति । जरत्कारुरपि गौरःक-पिंजलोमेध्यः कृकषालाचबर्हिणइति । बर्हीनीलकण्ठः सुमेधाः किञ्चिल्लोहितवर्णेति दीर्घपुच्छोगुरुतरः । कृष्णचोटिस्तुयःपक्षीस-मस्तोबेतिपावनइति चोटिश्चंचुः भक्ष्यानाह शङ्खः तित्तिरश्च-मयूरश्चलावकश्चकपिंजलम् वार्ध्रीनसंवर्त्तकंचभक्ष्यानाहयमः सदा सदेतिश्राद्धादेरन्यत्रापि जाबालः भक्ष्यःकपिंजलोनीलस्त्वा-टीबन्यपदायुधाः भक्ष्याविति नीलःकृष्णतित्तिरिः कपिंजलोगौ-रः वन्यपदायुधोवन्यकुक्कुटः वनेजलेभवो जलकुक्कुटइत्यन्ये तन्न

कलविङ्कं प्लवं हंसमितिमनुना प्लवशब्देन तस्य निषिद्धत्वात् च-क्रवाकं प्लवं क्रौंचमिति शङ्खनिषेधाच्च भारद्वाज्या मांसेनेति कात्या-यनोक्तेर्भरद्वाजो भक्ष्यः यत्तु न खादेत्तु भरद्वाजमिति सुमन्तुनोक्तम् त-च्च भरद्वाजोन्य इङ्कुविषयः कौजिडिया इति प्रसिद्धः तथा च निघण्टुः वटो बटक इत्युक्तो भरद्वाजोन्य इङ्कुटः वटङ्गोम्यो द्वितीयस्तु खंजरी-चित्रपुच्छकः इति सुमन्तुः भक्ष्यास्तु नीलकण्ठः स्याद्गरीतो खावति-त्तिरी हारीतो विहितप्रतिषिद्धः। कुक्कुटहारीतभक्षणे द्वादश-रात्रमनाहार इति शङ्खप्रतिषेधात् अन्यस्मृतिभ्यो वृयम् वर्ज्यो ना-ह मनुः क्रव्यादः शकुनीन्सर्वांस्तथा ग्रामनिवासिनः अनिर्दिष्टांश्चै-कशफांष्टिट्टिभञ्च विवर्जयेत्। कलविङ्कं प्लवं हंसं चक्राह्वं ग्राम-कुक्कुटम् सारसं रज्जुदालञ्च दात्यूहं शुकसारिका। प्रतुदाञ्जा-लपादांश्च कोयष्टिनखविष्करान् निमज्जतश्च मत्स्यादान्सौलं व-ल्लूरमेव च। बकं चैव बलाकांश्च काकोलं खञ्जरीटकम्। मत्स्या-दान्विड्वराहांश्च मत्स्यानेव च सर्वश इति। क्रव्यादो गृध्रादयः ग्रामवा-सिनः पारावतादयः अनिर्दिष्टभक्ष्यत्वेनाम्नातः एकशफाश्च-श्वादयः टिट्टिभो निष्ठुरशब्दभाषी टिटिहिरी इति प्रसिद्धः कलविङ्को-गृहवचकः प्लवो जलकुक्कुटः चक्राह्वः चक्रवाकः रज्जुदालो वृक्षकु-क्कुटः दात्यूहः कालकण्ठः प्रतुदः श्येनः जालपादा जालाकारपादाः कोयष्टिः शिखरी नखविष्किराश्चकोरादयः निमज्जन्तो मत्स्यादान्नि मज्ज्य मत्स्यदा काकोलो गिरिकाकः मत्स्यादा अनिमज्जन्तोपि अ-न्ये प्रसिद्धः देवलः उलूककुररश्येनगृध्रकुक्कुटवायसाः चकोरः को किलो रज्जुदालकश्चकमज्जकौ पारावतकपोतौ च नभक्ष्याः पक्षिणो स्मृताः। जरत्कारुः कारापिकान्कपोतञ्च स्तोतकं तत्तुरण्डकम् स-कृप्रजं सारिकाञ्च कलविङ्कञ्च वर्जयेत् कारापिकाः शकुनशास्त्रो-

ता: खोतकश्चातक: रक्ततुण्ड:शुक: सकृत्प्रज:काक: लोमश:ग्रा मकुक्कुट: । आतापीमांसानपिवर्जयेत् आतापीचिल्ल:वेदनिधि: काकारिपिङ्गलाक्रौञ्च: वकोटीटिट्टिसारसौ चर्मपभासौ भृङ्गराजश्चा न्द्रस्तुग्ध्वाव्रतश्चरेत् काकारिर्घूक: पिङ्गलामुखूसरद्रतिप्रसिद्ध: वकोटोवक: चाषोनीलपक्षी स्वर्णपक्षीतिप्रसिद्ध: जग्ध्वाप्राश्य- चान्द्रञ्चान्द्रायणमित्यर्थ: । शङ्ग:हंसप्लवद्गुञ्च्चकङ्काकङ्काकोलङ्क- च्छरीटकम् मत्स्यादांश्चतथामत्स्यान्वलाकांशुकसारिके । चक्रवा- कम्प्लवङ्कोकम्मण्डकम्भुजगङ्कपिम् मासमेकंव्रतङ्कुर्यादेतांश्चैवनभो- जयेत् मद्गुर्जलवायस: व्रतञ्चान्द्रायणम् मत्स्यव्यवस्थाप्रागुक्ता निषिद्धमत्स्याशनेत्यर्थ: । धौम्य: पारावतंरथांगञ्चमरालञ्चकु- लिङ्ककम् जग्ध्वाह्निकुक्कुटंग्राम्यंव्रतेनापिनशुध्यति रथांगश्चक्र- वाक: मरालोहंस: कुलिङ्गकोव्रतेनचान्द्रायणेनेत्यर्थ:अन्यत्स्मृति- ष्योह्यम ।

## मू॰ षट्छागेन ॥ ११ ॥

पितृणांतृप्तिरित्यर्थ: तथाचमनु: । षण्मासञ्छागमांसेनेतिछा- गोमहोच्च: वार्ध्रीनसादन्य: तद्विधेर्विशिष्टत्वात् । यत्तु । छागलं- सप्तवैमासानिति मार्कण्डेये नोक्तम् तदारण्याजविषयम् तथा- चश्रुति: । सोमायकुलुङ्ग्आरण्योजइति । यच्चनचत्प्यंत्यजेनत्वि- तिदेवलेनोक्तम् तद्वार्ध्रीनसव्यतिरिक्तपक्षिविषयं यत्पुनर्द्वादशमा- सांछागेनेति पैठीनसिनोक्तम् तत्तूपराजविषयम् तस्यातिपावन- त्वात् तथाचसमहोच्चेतिपावनइतिप्रागुक्तमित्यविरोध: ।

## मू॰ सप्तकौर्मेण ॥ १२ ॥

कूर्म:कच्छप:तन्मांसेनेत्यर्थ: तथाचदेवल: कूर्म:स्यात्सप्तमासिकी

ति यमोपि कूर्मः प्रीणातिसप्ततिर्विति यत्तु शशकूर्म योर्मासेनमासैरे-
कादशभिस्त्विति मनुनोक्तम् तद्बृहत्कूर्मविषयमारण्यविषयमेवेत्य-
विरोधः यत्तु नखादेत्कूर्मसूकराविति निषेधस्तद्विषयमग्रेवद्यामः।

## सू॰ अष्टौवाराहेण ॥ १३ ॥

वाराहआरण्यसूकरस्तन्मांसेनेत्यर्थः तथाचदेवलः अष्टौमा-
मान्वराहेणेति यत्तु दशमासास्तुतृप्यन्तिवाराहमहिषामिषैरि-
तिमनुनोक्तम्। तन्मांसलवराहविषयं तस्यघृतसम्भूतत्वेनौचि-
त्यात् ।तथाचश्रुतिः अग्नौहवैदेवाघृतंकुम्भम्प्रवेशयांचक्रुस्ततोवरा-
हाःसम्बभूवुस्तस्माद्वराहं मेदुरोघृताद्धिसम्भूतइति यत्तु व्यब्दमासा-
च्छूकरामिषमितिमार्कण्डेयेनोक्तम् तदमांसलविषयम्भवितुमर्ह-
ति अ अथाविरोधात् अतएवाहुः। नखादेत्कूर्मसूकराविति नि-
षेधाद्वराहकूर्ममांसन्नभक्ष्यमिति। तन्न। तस्यकार्त्तिकादिवैशा-
वकालविषयत्वाच्छ्वेतवराहविषयत्वाद्वा तथाचनारदीये। का-
र्त्तिकेसूकरमांसंयस्तुभुंक्ते हिदुर्मतिः तद्दुक्तो जायतेप्रापोविष्टा-
शीग्रामसूकरः नमात्स्यंभक्षयेन्मांसन्नकौर्मंनान्यदेवहिइतितद्गु-
क्तौरौरवान्भुक्त्वा नेत्यनुवृत्तौ हारीतः पारावतपाण्डुसूकरसारि-
केतिउपमन्युरपि ग्राम्यश्वेतवराहौतुनभक्ष्यौद्विजपुङ्गवैरिति।

## सू॰ नवमेषमांसेन ॥ १४ ॥

मेषोग्राम्यभेदः तन्मांसेनेत्यर्थः। तथाचयमः मेषैः प्रीणातिवैन-
वेति यत्तु दध्यत्येकादशाविकैरितिदेवलेनोक्तम्। यच्च तथैकादश-
मासंवाआरभ्यम्मिदृद्रनामितिच मार्कण्डेयेनतत्तु परविषयम् अन-
विकारप्रत्ययेप्रकृतेतत्परिहारेणपुनर्मांसग्रहणम् मासविकारप्रा-
प्त्यर्थं तेनतद्विकाराअपिकालान्तरसाधितादेयाइत्यर्थः। तथा-

चस्कन्दसम्बारे अस्नेहा अपि गोधूमयवगोरसविक्रियाः तथा मांस-
विकाराश्चदधिक्षीरगुडस्य चेति। भक्षयेदितिशेषः।

## मू० दशमाहिषेण॥ १५॥

तृप्तिरित्यर्थः तथाचदेवलः। दशमाहिषमांसेनेति। यत्वे-
कादशमासान्माहिषेणेति पैठीनसिनोक्तन्तदारण्यविषयंतूपरविष-
यंत्रामहिषभक्षणस्य देशविशेषेव्यवस्थितम् तथाचयमः। कासरो-
हिगिरौमेध्याइति आहप्रजापतिरिति कासरोमहिषः। ननुचअ-
भक्ष्याः पशुजातीनाङ्गोखरोष्ट्राः सकुञ्जराः सिंहव्याघ्रर्क्षशरभाः।
सर्पाजगरकास्तथा शशमूषकमार्जारनकुलग्राम्यसूकराः सृगा-
लऋषभद्वीपिगोलांगूलमर्कटाइति। तथा वार्द्धमौर्द्धञ्चनारञ्चहारङ्का-
रंचरासभं। क्रौंगं लोमशिकम्मांसम्भुक्त्वाभवतिविट्कृमिः। वेशरो-
ष्ट्रगजखाश्वऋषभान्करिमाचले रासभम्प्राश्यचभवेद्विट्कृमिर्बाभवे
भवइतिदेवलव्याघ्रपादवचनैरभक्ष्यमध्येमहिषानुक्तेः
सार्वत्रिकम्महिषभक्षणङ्किन्नस्यादितिचेत् मैवंभागीः गिरिमन्तरे-
णतद्भक्षणमहादोषापत्तेः। तथाचभारद्वाजः। शङ्कुमूषकसर्पास्तुसै-
रभंचगिरिंविना। जग्ध्वाद्विजानशुध्यन्तिप्रायश्चित्तशतैरिति।
तस्माद्देशविशेषएवतद्भक्षणं व्यवस्थितमितिसूक्ष्मम् वार्द्धबार्षभंउ-
द्रोजलपशुस्तस्य। जलमानुषइत्येके। नरश्मानुषम् हारं हरिश-
ब्दवाच्यानांसिंहाश्वकपिभेकादीनां कारङ्कारिणां क्रौगोवन्यः
श्वालस्य लोमशिकालोखरीतिप्रसिद्धा। तस्य लोमकम् विटकृमि-
विष्ठाक्रिमिः। द्वीपीव्याघ्रविशेषः गोलांगूलोवानरविशेषः मर्क
टग्रहणश्वादिपञ्चनखोपलक्षणम्।

## मू० एकादशपार्षतेन॥ १६॥

पृषतश्चित्रमृगस्तन्मांसेनेत्यर्थः। तथाचगोभिलः एकादशपार्ष-

तेनेति। ननु तद्व्याख्याने पृषतशब्देन किञ्चित्तद्गुणोवाच्य: किं वा चित्र मृगजातिरिति तत्र यदि चित्रगुणोवाच्य:स्यात्तर्हि रुरुच्छागादीनामपि पृषत: गुणे एकादशमासतृप्तिहेतु: स्यात्। ततश्च विहिता: सर्वेपि पृषता: सन्त: एकादशमास तृप्तिहेतवइत्यर्थ:स्यात्। अथ पृषत-शब्देन चित्रमृगजातिर्वाच्यं स्यात्तर्हि तज्जातेर्दैववशात्कथञ्चिदपृ-षतत्वे एकादशमासतृप्तिहेतुत्वं नस्यात् प्रत्युत विहितजाते: परि त्यागश्चेत्यर्थ:स्यात्। तस्मात्पृषतशब्दस्य का गतिरित्याक्षेप: इतुरच्य तेव्याख्यानतो विशेष: प्रतिपत्तिरितिन्यायेन व्याख्यात चित्रमृगसंज्ञै वैतरस्यार्थं कृत्वा चित्रमृगस्यैव तावन्मासतृप्तिहेतुनान्यस्येति एवंसति छागशब्दस्या न्वेषणाच्छागादिवाचकत्वा भावात्पृषतत्वे सत्यपि नतस्यान्वयोयुक्त: तस्माच्चित्रमृगेणैवतावन्मासतृप्तिरिति सिद्धम्। ततश्च पञ्चतृप्यन्तिपार्षतै: पार्षतेनेहसप्तवैनवमासान्पार्ष तेनएकादशपार्षतेनेति देवलमनुपैठीनसि कात्यायनवचनानां विषयानुपलब्धेर्विकल्पाएव शक्यन्तेवक्तुंनविषया:। अथवा सर्वमृ गजातिषु पृषतत्वं विशिष्टत्वेनैकादशेतिसर्वेभ्य स्तृप्तिराधिक्यमित्यर्थ: ततश्चैवं विषय:। पञ्चतृप्यन्तिपार्षतैरिति देवलवचनं हरिणसादृश्य चित्ररुरुविषयं पार्षतेनेहसप्तवाइति मनुनोक्तंवक्रशाख शृङ्गचित्र रुरुविषयं। नवमासान्पार्षतेनेति पैठीनसिनोक्तं वरचित्ररुरुविषयं एकादशपार्षतेनेति चित्रतूपरविषयमित्यविरोध: अयमाशय:।या-न्मासान्रुरुभिर्मृगैरिति त्रिमासतृप्तिविषयस्य रुरो:पृषतत्वेन पञ्च-तृप्यन्तिपार्षतैरिति तृप्तिविशेष: रुरु:प्रीणातिपञ्चकैरिति पञ्च-मासतृप्तिविषयस्यतु रुरो:पृषतत्वेन एकादशपार्षतेनेहसप्तवैइति तृप्तिविशेष:। रौरवेणनवैवर्षाण्विति नवमासतृप्तिविषयत्वेन एका-दशपार्षतेनेतितृप्तिविशेष:। सर्वपृषतानान्तूपरत्वेसति अनन्ता-

तृप्तिरिति। अनन्ताखड्गमांसेन लोहच्छागाच्चतूपरादिति वच-
चनादेवंत्रिषयविभागा हरिणमेषशशवाहमहिषशशानाम् प्रषतत्वा-
संभवात् एवङ्कल्पनागौरवमप्यविरुद्धं। प्रमाणकल्पनेदोषाभावात्
तथाचाङ्गिरा:। प्रमाणानिप्रमाणज्ञैः परिकल्प्यानियत्नतः सीद-
न्तिहिप्रमाणानि प्रमाणैरव्यवस्थितैः भट्टोपि। प्रमाणवन्तिक-
ल्प्यानि सामान्यानिवहून्यपि अदृष्टशतभागोपि नकल्प्योनिः-
प्रमाणकइति॥

## मू० सम्वत्सरन्तुगव्येनपयसा॥ १७॥

गव्यग्रहणमितरव्युदासार्थं। तुशब्दोविशेषः इतरपयोनिषेधे
प्यारण्यमहिषीक्षीरंप्रशस्तमिति विशेषित्यर्थः। तथाचब्रह्मपुराणम्
आरण्यमहिषीक्षीरं शर्कराशुंठिसंयुतं। मधुयुक्तन्तत्तुहितं दद्या-
दमृतमेवच तदिति निषिद्धमाहयाज्ञवल्क्यः। सन्धिन्यनिर्द्दशाव-
त्सागोपयः परिवर्जयेत्। औष्ट्रमैकशफंस्त्रैणमारण्यक मथाविकं
सन्धिनीवृषाक्रान्ताकामुकी अनिर्दशाऽनतिक्रान्तदशाहा अव-
त्सावत्सरहितान्यवत्साच। स्त्रैणंस्त्रीभवं द्विस्तन्युपलक्षणमेतत् यच्च
सर्वासांद्विस्तनीनां क्षीरमभोज्यमजावर्जमिति शंखेनाजाक्षीरस्य
भक्ष्यत्वमुक्तम् तच्छ्राद्धेतरविषयं। कृष्णाजाऽज्यतसीतैलं पयश्चा-
जाविकादिकम्। महिषञ्चामरक्षीरं जलमल्पजलाशयादिति।
स्कन्दसंवादोक्तत्वात् वर्ज्यमितिशेषः। महिषंग्राम्यं आरण्या-
नाञ्चसर्वेषां मृगाणांमहिषींविनेतिमनूक्तेः। गौतमोपि यमसूःस्य-
न्दिनीनाञ्चेति पयोवर्जमितिशेषः। यमसूर्युग्मप्रसूः स्यन्दिनीस्र-
वत्य यस्तक्षीरमपेयं विवत्सायाअन्यवत्सायाश्चेति बौधायनः॥

## मू० पायसेनवा॥ १८॥

पयसाश्रृतंपायसं पयोविकारश्च तेनवासंवत्सरंतृप्तिरित्यर्थः।

तथाचविष्णुः संवत्सरन्तुपयसा तद्विकारेणवेति। अपिचमार्कण्डेयः संवत्सरन्तथागव्यम् पयःपायसमेववेति। आदित्यपुराणे विविध-पायसन्दद्यादिति तथामांसविकाराश्च दधिक्षीरगुडस्येतिवचनात् पयोविकाराः कूर्चिकाक्षीरवटकादयः॥

मू॰ वार्ध्रीनसमांसेनद्वादशवर्षाणि॥१८॥

तृप्तिरितिशेषः वार्ध्रीनसस्त्रिविधः तथाचविष्णुधर्मोत्तरे। त्रिपिवन्त्विन्द्रियक्षीणम् यूथस्याग्रहणन्तथा। रक्तवर्णन्तुराजेन्द्र छागम्बार्ध्रीनसंविदुरिति मुखकर्णौजलपानेपतन्तौ जलन्त्रिपिव-त्यर्थः। त्रिपिवन्त्विन्द्रयक्षीणम् श्वेतंवृद्धमजापतिम्। वार्ध्रीन सन्तुतंप्राहु र्याज्ञिकाःपितृकर्मणीत्यन्यत्र निगमोपि। कृष्णग्रीवो रक्तशिराः श्वेतपक्षोविहङ्गमः सवैवार्ध्रीनसःप्रोक्त इत्येषानैगमीश्रु-तिरिति। अत्रानूचानाःप्रमाणं रक्तवर्णोवार्ध्रीनसो ऽक्षयतृप्ति विषयोवेत्यविरोधः वार्ध्रीनसंमहाशल्को लोहाजस्तूपरोक्तं। आ-नन्त्यायभवेद्दत्तइति वचनात्। लोहामिषङ्कालशाकं मांसंवार्ध्री-नसस्यवेति याज्ञवल्क्यवचनाच्च। वार्ध्रीनसशब्देनत्वोच्चारणमना लोचितं। उष्ट्रोष्ट्रग्रीवान्वार्ध्रीनसस्तेमत्या अरण्यायसृमरोरुरूरौद्रः इतिश्रुतेस्तवर्गीयपाठात्। श्राद्धशिष्टस्यामांसस्यावश्य भक्षणत्वम-वगन्तव्यम्।तथाचविश्वामित्रः धर्मशास्त्रात्तुविज्ञाय भक्ष्यञ्चाभक्ष्य-मेववा प्रदायपितृदेवेभ्यो भुञ्जीतातिथिपूर्वकमिति। अत्ररागप्राप्ते भोजनेभुञ्जीतेतिनियमार्थं। तथाचोपमन्युः द्विजाविचभक्ष्याणां मांसंशाकादिमेध्यवदिति। पवित्रताभिधानादिति॥

इति श्रीश्राद्धकाशिकायां सूत्रवृत्तौ तृप्तिकरणंसामान्यं समाप्तमिति॥

सप्तमीकण्डिकाचसमाप्ता॥

इत्थं ग्राम्यारण्यौषधिमूलफलै रनेकमत्स्यमांसैश्च तृप्तिमभिधाया-ऽधुनाक्षय्यतृप्तिंविवक्षुःसूत्रमारभते ।

मू० अथाक्षय्यतृप्तिः ॥ १ ॥

अथशब्दःप्रश्ने कार्त्स्न्ये वा अक्षय्यातृप्तिःकथङ्किं वाक्षय्यतृप्ति-करन्द्रव्यमिति प्रश्नमित्यर्थः कार्त्स्न्ये नाक्षय्यतृप्तिरुच्यतइतिवार्थः । अक्षय्योनन्तता तथाचमनुः कालशाकम्मह।शल्कःखड्गोलोहा-मिषंमधु । आनंत्यायैवकल्प्यन्ते मुन्यन्नानिचसर्वशइति । प्रश्नोत्त-रमाह ।

मू० खड्गमांसंकालशाकँल्लो हच्छाग-श्चमांसं ॥ २ ॥

खड्गस्तूपरःखड्गमृगस्तन्मांसंनिषिद्धएण्यादिव्यतिरिक्तम् । तथाचविष्णुः कालशाकंमहाशल्कोमांसंवार्ध्रीनसस्यच विषाण-वर्ज्यखड्गानासूयतांस्तुभक्षाइइति यत्तुखड्गमांसेनत्रयोदशमा-सानितिपैठीनसिनोक्तन्तत्सशृंगविषयम् लोहःसर्वलोहितच्छागः तथाचपैठीनसिः सर्वलोहच्छागेनानंत्यमिति लोहितशब्दोत्रावयव-वृत्तिः एवमादिद्रव्यमक्षय्यतृप्तिकरमिति पूर्वप्रश्नस्योत्तरमित्यर्थः । खड्गलोहितयोर्मध्येकालशाकोक्तिस्तत्तुल्यफलार्थः ।

मू० मधुमहाशल्कः ॥ ३ ॥

मधुमाक्षिकः महाशल्कोमत्स्यभेदः महसिनइतिमध्यदेशेप्रसिद्धः महाशल्कामहाकालिनोमत्स्याइतित्रमस्मृतिःइहह्निवलइतिय-स्यरूढिरितिहलायुधःटेकायांदौप्रसिद्धइतिकल्पतरुःकंवलाख्यइ-तिकश्चित् शल्ककोवेत्यन्ये एवमनेकविप्रतिपत्तौपुलस्त्योक्तएवाद-

र्ण स्व: एक्षश्चक्रोर्द्धचन्द्रश्चललाटेखड्गसंयुत:शुक्लवर्णस्तुमत्स्यो-
ष्ठिमञ्चाथक्ष:सउच्यते इति अत्र केचिदाहु: । कलौश्राद्धे मधुनिषि-
द्धमिति । तथाचश्राद्धे मांसन्तथामध्विति लिखितस्मात् । तन्नवि-
चारसहम् निबन्धकृद्भिर्निर्मूलप्रतिपादनादित्युक्तम् । कलौविधाय-
कवचनोपलब्धेश्च तथाचपैठीनसि: परमान्नं कालशाकम्मधुमांसं-
घृतम्पय: मुन्यन्नानितिलाविप्रा:प्रकृत्याहविरष्टधा । शस्तान्यष्टौ-
तुसर्वेषुयुगेषुमुनिसत्तमा: पितॄणांदेवतानाञ्चदुर्लभानिकलौयुग-
इति । परमान्नम्पायसम् । देवलोपि दर्भास्तिलागजच्छायादौहित्रं
मधुसर्पिषी कुतपोनीलकण्ठ श्चपवित्राणीहपैतृके इहकलौ तथा
तुलसीमधुदर्भाश्चतिला:सर्पिर्गवामिषं एतन्मेध्यतमन्नित्यंसदा-
चाराश्चयेद्विजाइति सुमेधाअपि विमांसंविमधुश्राद्धम्बिद्धतम्प्रीति
भोजनम् विनासमतरङ्गामोव्योमालिङ्गनवच्चयमिति ॥

## मू० वर्षासुमघाश्राद्धम् ॥ ४ ॥

वर्षांतोमघानक्षत्रे श्राद्धमक्षय्यतृप्तिंकृदितार्थ: एतच्चापिण्ड-
कं जेष्ठपुत्रिणाकर्त्तव्यं तथाचदेवीपुराणम् तत्रापिमहतीपूजाक-
र्तव्यापितृदैवते ऋक्षेपिण्डप्रदानन्तुज्येष्ठपुत्रीविवर्जयेदिति तथाम-
घायांपिण्डदानेनज्येष्ठ:पुत्रोविनश्यतीति अत्र केचिदाहु: ज्येष्ठ:आ-
द्यगर्भोक्तवइति । तदयुक्तम् । तद्व्यतिरिक्तस्यापिज्येष्ठत्वात् तथा-
चशातातप: अनाद्यपुत्रोजेष्ठोपिभ्रातापुत्रोनिगद्यतइति अत-
एवजेष्ठपुत्ररहितेनमघायांसपिण्डमेवकर्त्तव्यमितिगम्यते महा-
फलत्वात् एतच्चमघाऽन्वितदिनान्तरेनत्रयोदश्यांमघायांपिण्ड-
दानेनज्येष्ठपुत्रोविनश्यति कनीयांस्तुत्रयोदश्यांत्रयाद्वाभ्युदयाद्दते
इतुग्रभययोगोपुत्रिमानस्यपिण्डनिषेधात् अत्रवाविभक्तभ्रातॄणांपौत्र

स्यचपुत्राभावे महाफलत्वात्पृथग्पृथगधिकारः । तथाचपैठीनसिः अत्रापिपितृगीतागाथा छागेनसर्वलोहेनवर्षासुच मघासुच पुत्रो-वायदिवापौत्रोयोनोदद्यात्त्रयोदशीमिति तथात्रिभक्तावाविभक्ता-वाकुर्युःश्राद्धमदैवतम् । मघासुचततोन्यत्रनाधिकारः पृथग्विना अदैवतञ्चयाहैकोद्दिष्टं पृथपदमुभयत्रान्वेविभक्ताअविभक्तावादैवंम-घासुचश्राद्धं पृथक्कुर्युः ततोन्यत्रपृथग्विनानधिकारइत्यन्वयः अथ-वाततइतिसार्वविभक्तिस्तसिः । ततोविनादैवतंमघाश्राद्धञ्चविना-न्यत्रपृथङ्नाधिकारइत्यन्वयः उभयान्वयेपिचयाहमघाश्राद्धयोरे-वविभक्ताविभक्तयोः पृथक्पृथगधिकारोन्यत्रनकिंत्वविभक्तै नैवैकश्रा-द्धंकर्त्तव्यन्नपृथगित्यर्थः । तथाचप्रचेताः अर्वाक्संवत्सरात्सर्वेकुर्युः श्राद्धंसमेत्यवै । संवत्सरेव्यतीतेतुकुर्युःश्राद्धं पृथक्पृथक् । पठन्ति-च । एकादश्यामघामशौजेप्रष्टस्य विधिवत्क्रियां । कुर्युन्नैकैकशः श्राद्धमाब्दिकन्तुपृथक्पृथगिति किञ्च नवश्राद्धंसपिण्डत्वंश्राद्धा-न्यपिचषोडश । एकेनैवतुकार्याणिसविभक्तधनेष्वपि । अपिश-ब्दादविभक्तेष्वितिपरिगणनात् यत्तु विभक्तास्तुपृथक्कुर्युःप्रतिसंव-त्सरादिकम् एकेनैवात्रिभक्तेषुक्रतेसर्वेषुतत्कृतम् यच्चभ्रातृणाम-विभक्तानामेकोधर्मःप्रवर्त्तते विभागेसतिधर्मोपिभवेत्तेषांपृथक्पृ-थगितिवचनादविभक्तामध्यदेशादेकमेव कुर्वन्तितदशक्तविषय-मित्यविरोधः । वर्षास्वितिचन्द्रमासाभिप्रायं ननुवर्षास्वित्यभिधा-नान्मासद्वयात्मकत्वत्वेकमासेमघाश्राद्धमितिसन्देहः । मैवं । अपरपक्षेश्राद्धमितुपक्रमादित्यदोषः अतश्चापरपक्षमघायामिति तथाचयाज्ञवल्क्यः । याम्यंवापैतृकंवापिपितृपक्षेविशेषतः तत्र सङ्कल्पनंकुर्यात्पितृणांपुष्टिदःसदेति ।

